देवा उदिता सूर्यस्य। निरꣳहंसः पिपृतां निरवद्यात्। तन्नो मित्रो वरुणो मामहन्ताम्। अदितिः सिन्धुः पृथिवी उत द्यौः॥ दिवो रुक्म उरुचक्षा उदेति। दूरे अर्थस्तरणिर्भ्राजमानः। नूनं जनाः सूर्येण प्रसूताः। आयन्नर्थानि कृणवन्नपांꣳसि॥ शं नो भव चक्षसा शं नो अह्ना। शं भानुना शꣳ हिमा शं घृणेन। यथा शमस्मै शमसद्दुरोणे। तत्सूर्य द्रविणं धेहि चित्रम्॥ चित्रं देवानामुदगादनीकम्। चक्षुर्मित्रस्य वरुणस्याग्नेः। आ प्रा द्यावापृथिवी अन्तरिक्षम्। सूर्य आत्मा जगतस्तस्थुषश्च॥

---

## आदित्यसूक्तम्

**तै.सं. २-१-११**

ॐ आदित्यानामवसा नूतनेन सक्षीमहि शर्मणा शन्तमेन। अनागास्त्वे अदितित्वे तुरास इमं यज्ञं दधतु श्रोषमाणाः॥ न दक्षिणा वि चिकिते न सव्या न प्राचीनमादित्या नोत पश्चा। पाक्यां चिद्वसवो धीर्याचिद्युष्मानीतो अभयं ज्योतिरश्याम्॥ धारयन्त आदित्यासो जगत्स्था देवा विश्वस्य भुवनस्य गोपाः। दीर्घाधियो रक्षमाणा असुर्यमृतावानश्चयमाना ऋणानि॥ तिस्रो भूमीर्धारयन्त्रीꣳरुत द्यून्त्रीणि व्रता विदथे अन्तरेषाम्। ऋतेनाऽऽदित्या महि वो महित्वं तदर्यमन्वरुण मित्र चारु॥ यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः। आवोऽर्वाची सुमतिर्ववृत्यादꣳ-

होश्चिद्या वरिवोवित्तराऽसत् ॥ शुचिरपः सूयवसा अदब्ध उपक्षेति वृद्धवयाः सुवीरः । नकिष्टंघ्नन्त्यन्तितो न दूराद्य आदित्यानां भवति प्रणीतौ ॥

---

## अग्न्युत्तारणसूक्तम्

**तै.सं. ४-६-१**

ॐ अश्मन्नूर्जं पर्वते शिश्रियाणां वाते पर्जन्ये वरुणस्य शुष्मे । अद्भ्य ओषधीभ्यो वनस्पतिभ्योऽधि सम्भृतां तान्न इषमूर्जं धत्त मरुतः सꣳरराणाः ॥ अश्मꣳस्ते क्षुदमुं ते शुगृच्छतु यं द्विष्मः ॥ समुद्रस्य त्वाऽवाकयाऽग्ने परि व्ययामसि । पावको अस्मभ्यꣳ शिवो भव ॥ हिमस्य त्वा जरायुणाऽग्ने परि व्ययामसि । पावको अस्मभ्यꣳ शिवो भव ॥ उप ज्मन्नुपवेतसेऽवत्तरन्नदीष्वा । अग्ने पित्तमपामसि ॥ मण्डूकिताभिरा गहि सेमन्नो यज्ञम् । पावकवर्णꣳ शिवं कृधि ॥ पावक आ चितयन्त्या कृपा । क्षामन्रुरुच उषसो न भानुना ॥ तूर्वं न यामन्नेतशस्य नू रण आ यो घृणे । न ततृषाणो अजरः ॥ अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् वक्षि यक्षि च ॥ स नः पावक दीदिवोऽग्ने देवाꣳ इहाऽऽवह । उप यज्ञꣳ हविश्च नः ॥ अपामिदं न्ययनꣳ समुद्रस्य निवेशनम् । अन्यं ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव ॥ नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे । अन्यं ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव ॥ नृषदे वडप्सुषदे वड्वनसदे वड्बर्हिषदे वट्सुवर्विदे वट् ॥ ये देवा देवानां

यज्ञियां यज्ञियांनाꣳ संवत्सरीणमुपं भागमासंते। अहुतादों हविषों यज्ञे अस्मिन्त्स्वयं जुंहुध्वं मधुंनो घृतस्यं॥ ये देवा देवेष्वधिं देवत्वमायन् ये ब्रह्मंणः पुर एतारों अस्य। येभ्यो नर्ते पवंते धाम किञ्चन न ते दिवो न पृंथिव्या अधि स्नुषुं॥ प्राणदा अंपानदा व्यांनदाश्चंक्षुर्दा वंर्चोदा वंरिवोदाः। अन्यन्तें अस्मत्तंपन्तु हेतयंः पावको अस्मभ्यंꣳ शिवो भंव॥ अग्निस्तिग्मेनं शोचिषा यꣳसद्विश्वं न्यंत्रिणंम्। अग्निर्नो वꣳसते रयिम्॥ सैनाऽनींकेन सुविदत्रों अस्मे यष्टां देवाꣳ आयंजिष्ठः स्वस्ति। अदंब्धो गोपा उतनंः परस्पा अग्नें द्युमदुत रेवद्दिंदीहि॥

---

## अग्निसूक्तम्

**तै.ब्रा. २-८-२**

अग्ने नयं सुपथां राये अस्मान्। विश्वांनि देव वयुनांनि विद्वान्। युयोध्यंस्मज्जुंहुराणमेनंः। भूयिंष्ठान्ते नमंउक्तिं विधेम॥ प्र वंः शुक्रायं भानवें भरध्वम्। हव्यं मतिं चाग्नये सुपूंतम्। यो दैव्यांनि मानुंषा जनूꣳषिं। अन्तर्विश्वांनि विद्मना जिगांति॥ अच्छा गिरों मतयों देवयन्तींः। अग्निं यंन्ति द्रविंणं भिक्षंमाणाः। सुसन्दृशꣳ सुप्रतीकꣳ स्वञ्चंम्। हव्यवाहंमरतिं मानुंषाणाम्॥ अग्ने त्वमस्मद्युंयोध्यमींवाः। अनंग्नित्रा अभ्यंमन्त कृष्टीः। पुनंरस्मभ्यंꣳ सुवितायं देव। क्षां विश्वेंभिरजरेंभिर्यजत्र॥ अग्ने त्वं पांरया-नव्यों अस्मान्। स्वस्तिभिरतिं दुर्गाणि विश्वां। पूश्चं पृथ्वी बंहुला नं उर्वी।

भवां तोकाय तनंयाय शं योः ॥ प्र कांरवो मनना वच्यमांनाः । देवद्रीचीं नयथ देवयन्तंः । दक्षिणावाड्वाजिनी प्राच्येंति । हविर्भरंन्त्यग्नयें घृताचीं ॥

---

## यमसूक्तम्

**तै.आ. ६-६**

ॐ प्र केतुनां बृहता भांत्यग्निराविर्विश्वांनि वृषभो रोंरवीति । दिवश्चिदन्तादुप मामुदानंडपामुपस्थें महिषो वंवर्ध । इदं त एकं पर ऊंत एकं तृतीयेंन ज्योतिंषा संविंशस्व । संवेशंनस्तनुवै चारुंरेधि प्रियो देवानां परमे सधस्थें ॥ नाकें सुपर्णमुप यत्पतंन्तꣳ हृदा वेनंन्तो अभ्यचंक्षतत्वा । हिरंण्यपक्षं वरुंणस्य दूतं यमस्य योनौं शकुनं भुंरण्युम् ॥ अतिंद्रव सारमेयौ श्वानौं चतुरक्षौ शबलौं साधुनां पथा । अथां पितॄन्त्सुंविदत्राꣳ अपींहि यमेन ये संधमादं मदंन्ति । यौ ते श्वानौं यमरक्षितारौं चतुरक्षौ पंथिरक्षीं नृचक्षंसा । ताभ्यांꣳ राजन्परिंदेह्येनꣳ स्वस्ति चांस्मा अनमीवं चं धेहि । उरुणसावंसुतृपांवुलुम्बलौ यमस्यं दूतौ चंरतो वशाꣳ अनुं । तावस्मभ्यं दृशये सूर्याय पुनर्दत्तावसुंमद्येह भद्रम् । सोम एकेंभ्यः पवते घृतमेक उपांसते । येभ्यो मधुं प्रधावंति ताꣳश्चिंदेवापिं गच्छतात् । ये युध्यंन्ते प्रधनेंषु शूरांसो ये तंनुत्यजंः । ये वां सहस्रंदक्षिणास्ताꣳश्चिंदेवापिं गच्छतात् । तपंसा ये अंनाधृष्यास्तपंसा ये सुवंर्गताः । तपो ये चंक्रिरे महस्ताꣳश्चिंदेवापिं गच्छतात् ॥

---

## मृत्युसूक्तम्

तै.आ. ३-१४

ॐ हरिꣳ हरन्तमनुयन्ति देवाः । विश्वस्येशानं वृषभं मतीनाम् । ब्रह्म सरूपमनु मेदमागात् । अयनं मा विवधीर्वि क्रमस्व ॥ मा छिदो मृत्यो मा वधीः । मा मे बलं विवृहो मा प्रमोषीः । प्रजां मा मे रीरिष आयुरुग्र । नृचक्षसं त्वा हविषा विधेम ॥ सद्यश्चकमानाय । प्रवेपानाय मृत्यवे । प्रास्मा आशा अशृण्वन् । कामेनाजनयन्पुनः ॥ कामेन मे काम आगात् । हृदयाद्धृदयं मृत्योः । यदमीषामदः प्रियम् । तदैतूपमामभि ॥ परं मृत्यो अनु परेहि पन्थाम् । यस्ते स्व इतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि । मा नः प्रजाꣳ रीरिषो मोत वीरान् ॥ प्रपूर्व्यं मनसा वन्दमानः । नाधमानो वृषभं चर्षणीनाम् । यः प्रजानामेकराण्मानुषीणाम् । मृत्युं यजे प्रथमजामृतस्य ॥

---

## प्राजापत्यसूक्तम्

तै.ब्रा. २-८-१

ॐ प्रजापते न त्वदेतान्यन्यः । विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु । वयꣳ स्याम पतयो रयीणाम् ॥ रयीणां पतिं यजतं बृहन्तम् । अस्मिन्भरे नृतमं वाजसातौ । प्रजापतिं प्रथमजामृतस्य । यजाम देवमधि नो ब्रवीतु ॥ प्रजापते त्वन्निधिपाः पुराणः ।

देवानाँ पिता जनिता प्रजानाँम्। पतिर्विश्वस्य जगतः परस्पाः। हविर्नो देव विहवे जुषस्व॥ तवे मे लोकाः प्रदिशो दिशश्च। परावतो निवत उद्वतश्च। प्रजापते विश्वसृज्जीवधन्य इदं नो देव। प्रति हर्य हव्यम्॥ प्रजापतिं प्रथमं यज्ञियानाम्। देवानामग्रे यजतं यजध्वम्। स नो ददातु द्रविण॰ सुवीर्यम्। रायस्पोषं विष्यतु नाभिमस्मे॥ यो राय ईशे शतदाय उक्थ्यः। यः पशूना॰ रक्षिता विष्ठितानाम्। प्रजापतिः प्रथमजा ऋतस्य। सहस्रधामा जुषता॰ हविर्नः॥

# मङ्गळसूक्तम्

[१]**स्वस्तिसूक्तम् :** ॐ स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः । स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥ स्वस्तये वायुमुप ब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः । बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥ विश्वे देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये । देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः ॥ स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति । स्वस्ति न इन्द्रश्चाग्निश्च स्वस्ति नो अदिते कृधि ॥ स्वस्ति पन्थामनुचरेम सूर्याचन्द्रमसाविव । पुनर्ददताघ्नता जानता सङ्गमेमहि ॥ स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानाम् । असुरघ्नमिन्द्रसखं समत्सु बृहद्यशो नावमिवा रुहेम ॥ अंहोमुचमाङ्गिरसङ्गयञ्च स्वस्त्यात्रेयं मनसा च तार्क्ष्यम् । प्रयतपाणिः शरणं प्रपद्ये स्वस्ति सम्बाधेष्वभयं नो अस्तु ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिस्स्वस्ति नो बृहस्पतिर्दधातु ॥

[२]अस्मे देवासो वपुषे चिकित्सत यमाशिरा दम्पती वाममश्नुतः । पुमान्पुत्रो जायते विन्दते वस्वथ विश्वे अरपा एधते गृहः ॥ आशीर्दाया दम्पती वाममश्नुतामरिष्टो रायस्सचताꣳ समोकसा । य आऽसिंचत्सन्दुग्धं कुम्भ्या सहेष्टेन यामन्नमतिञ्जहातु सः ॥ सर्पिर्ग्रीवी पीवर्यस्य जाया पीवानः

---

१. ऋ..सं. ५-४-५१ २. तै.सं. ३-२-८

पुत्रा अकृंशासो अस्य। सहजानिर्यः सुमखस्यमान इन्द्रायाऽऽशिरं॰ सह कुम्भ्याऽदांत्॥ आशीर्म ऊर्जमुत सुप्रजास्त्वमिषन्दधातु द्रविण॰ सवर्चसम्। सञ्जयन्क्षेत्राणि सहसाहमिन्द्र कृण्वानो अन्या॰ अधरान्त्सपत्नान्॥ भूतमसि भूते मा धा मुखमसि मुखं भूयासं द्यावापृथिवीभ्यां त्वा परिगृह्णामि विश्वे त्वा देवा वैश्वानराः प्रच्यावयन्तु दिवि देवान्दृं॰हान्तरिक्षे वयां॰सि पृथिव्यां पार्थिवान्ध्रुवं ध्रुवेण हविषाऽव सोमन्नयामसि। यथा नः सर्वमिज्जगदयक्ष्म॰ सुमना असत्। यथा न इन्द्र इद्विशः केवलीः सर्वाः समनसः करत्। यथा नः सर्वा इद्दिशोऽस्माकं केवलीरसन्न्॥

[1]आशुः शिशानो वृषभो न युध्मो घनाघनः क्षोभणश्चर्षणीनाम्। संक्रन्दनोऽनिमिष एकवीरः शत॰सेना अजयत्साकमिन्द्रः॥ संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना। तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा॥ स इषुहस्तैः सनिषङ्गिभिर्वशी स॰स्रष्टा सयुध इन्द्रो गणेन। स॰सृष्टजित्सोमपाबाहुशर्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता॥ बृहस्पते परिदीया रथेन रक्षोहाऽमित्रां॰ अप बाधमानः। प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम्॥ गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा। इम॰ सजाता अनुवीरयध्वमिन्द्र॰ सखायोऽनु स॰रभध्वम्॥ बलविज्ञायः स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रः। अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित्॥

---

१. तै.सं. ४-६-४.

अभि गोत्राणि सहंसा गाहंमानोऽदायो वीरः शतमंन्युरिन्द्रंः। दुश्च्यवनः पृंतनाषाडंयुध्योऽस्माकंᳪसेनां अवतु प्रयुत्सु। इन्द्रं आसां नेता बृहस्पतिर्दक्षिंणा यज्ञः पुर एंतु सोमंः। देवसेनानांम भिभञ्जतीनाञ्जयंन्तीनां मरुतों यन्त्वग्रें॥ इन्द्रंस्य वृष्णो वरुंणस्य राज्ञं आदित्यानां मरुताᳪ शर्धं उग्रम्। महामंनसां भुवनच्यवानां घोषों देवानां जयंतामुदंस्थात्॥ अस्माकमिन्द्रः समृंतेषु ध्वजेष्वस्माकं या इषंवस्ता जंयन्तु। अस्माकं वीरा उत्तरे भवन्त्वस्मानुं देवा अवता हवेंषु॥ उद्धंर्षय मघवन्नायुंधान्युत्सत्वंनां मामकानां महांᳪसि। उद्वृंत्रहन्वाजिनां वाजिंनान्युद्रथांनाञ्जयंतामेतु घोषंः॥ उप प्रेत जयंता नरः स्थिरा वंः सन्तु बाहवंः। इन्द्रों वः शर्मं यच्छत्वनाधृष्या यथाऽसंथ॥ अवंसृष्टा परांपत शरंव्ये ब्रह्मंसᳪशिता। गच्छामित्रान्प्रविंश मैषां कञ्चनोच्छिंषः॥ मर्माणि ते वर्मंभिश्छादयामि सोमंस्त्वा राजाऽमृतेंनाभिवंस्ताम्। उरोर्वरीयो वरिंवस्ते अस्तु जयंन्तं त्वामनुंमदन्तु देवाः॥ यत्रं बाणाः सम्पतंन्ति कुमारा विंशिखा इंव। इन्द्रों नस्तत्रं वृत्रहा विंश्वाहा शर्मं यच्छतु॥

[१]जीमूतंस्येव भवति प्रतीकं यद्वर्मी यातिं समदांमुपस्थें। अनांविद्धया तनुवां जय त्वᳪस त्वा वर्मंणो महिमा पिंपर्तु॥ धन्वंना गा धन्वंनाजिं जयेम धन्वंना तीव्राः समदों जयेम। धनुश्शत्रोरपकामं कृणोति धन्वंना सर्वाः प्रदिशों जयेम॥ वक्ष्यन्ती वेदा गंनीगन्ति कर्णं प्रियᳪ सखांयं परिषस्वजाना। योषेंव शिङ्क्ते वितताधिधन्वञ्ज्या इयᳪ समंने पारयंन्ती॥ ते

१. तै.सं. ४-६-६

आचरंन्ती समंनेव योषां मातेवं पुत्रं बिंभृतामुपस्थें। अप शत्रून्विध्यताꣳ संविदाने आर्त्नी इमे विंष्फुरन्तीं अमित्रान्॥ बह्वीनां पिता बहुरंस्य पुत्रश्चिश्चा कृणोति समंनाऽवगत्यं। इषुधिः सङ्काः पृतंनाश्च सर्वाः पृष्ठे निनंद्धो जयति प्रसूंतः॥ रथे तिष्ठंन्नयति वाजिनंः पुरो यत्रं यत्र कामयंते सुषारथिः। अभीशूंनां महिमानं पनायत मनंः पश्चादनुंयच्छन्ति रश्मयंः॥ तीव्रान्घोषांन्कृण्वते वृषंपाणयोऽश्वा रथेंभिः सह वाजयंन्तः। अवक्रामंन्तः प्रपंदैरमित्रांन्क्षिणन्ति शत्रूꣳरनंपव्ययन्तः॥ रथवाहंनꣳ हविरंस्य नाम यत्राऽऽयुंधं निहिंतमस्य वर्मं। तत्रारथमुपंशग्मꣳ संदेम विश्वाहां वयꣳ सुंमनस्यमांनाः॥ स्वादुषꣳ सदंः पितरों वयोधाः कृंच्छ्रेश्रितः शक्तींवन्तो गभीराः। चित्रसेंना इषुंबला अमृंध्राः सतोवींरा उरवों व्रातसाहाः॥ ब्राह्मंणासः पितंरः सोम्यांसः शिवे नो द्यावांपृथिवी अंनेहसां। पूषा नंः पातु दुरितादृंतावृधो रक्षा माकिंर्नो अघशꣳस ईशत॥ सुपर्णं वंस्ते मृगो अंस्या दन्तो गोभिस्सन्नंद्धा पतति प्रसूंता। यत्रा नरस्सञ्चवि च द्रवंन्ति तत्रास्मभ्यमिषंवः शर्मं यꣳसन्॥ ऋजींते परिंवृङ्धि नोऽश्मां भवतु नस्तनूः। सोमो अधिंब्रवीतु नोऽदिंतिः शर्मं यच्छतु॥ आ जंङ्घन्ति सान्वेंषां जघनाꣳ उपंजिघ्नते। अश्वांजनि प्रचेंतसोऽश्वान्त्समत्सुं चोदय॥ अहिंरिव भोगैः पर्येति बाहुं ज्यायां हेतिं परिबाधंमानः। हस्तघ्नो विश्वां वयुनांनि विद्वान्पुमान्पुमांꣳ सम्परिंपातु विश्वतंः॥ वनंस्पते वीड्वंङ्गो हि भूया अस्मत्संखा प्रतरंणः सुवीरंः। गोभिः सन्नंद्धो असि वीडयंस्वाऽऽस्थाता ते जयतु जेत्वांनि॥ दिवः पृंथिव्याः पर्योज उद्धृंतं वनस्पतिंभ्यः पर्याभृंतꣳ

सहः। अपामोजमानं परि गोभिरावृतमिन्द्रस्य वज्रं हविषा रथं यज॥ इन्द्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः। सेमान्नो हव्यदातिं जुषाणो देवरथ प्रति हव्या गृभाय॥ उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत्। स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो अपसेध शत्रून्॥ आ क्रन्दय बलमोजो न आ धा निष्टनिहि दुरिता बाधमानः। अप प्रोथ दुन्दुभे दुच्छुनां इत इन्द्रस्य मुष्टिरसि वीडयस्व॥ आऽमूरज प्रत्यावर्तयेमाः केतुमद्दुन्दुभिर्वावदीति। समश्वपर्णाश्चरन्ति नो नरोऽस्माकमिन्द्र रथिनो जयन्तु॥

[१]ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तनुवं पुषेम। मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाऽऽध्यक्षेण पृतना जयेम॥ मम देवा विहवे सन्तु सर्व इन्द्रावन्तो मरुतो विष्णुरग्निः। ममान्तरिक्षमुरु गोपमस्तु मह्यं वातः पवतां कामे अस्मिन्॥ मयि देवा द्रविणमायजन्तां मय्याशीरस्तु मयि देवहूतिः। दैव्या होतारावनिषन्त पूर्वेऽरिष्टाः स्याम तनुवा सुवीराः॥ मह्यं यजन्तु मम यानि हव्याऽऽकूतिः सत्या मनसो मे अस्तु। एनो मा नि गां कतमच्चन नाहं विश्वे देवासो अधि वोचता मे॥ देवीः षडुर्वी रुरु णः कृणोत विश्वे देवास इह वीरयध्वम्। मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन्॥ अग्निर्मन्युं प्रतिनुदन्पुरस्ताददब्धो गोपाः परिपाहि नस्त्वम्। प्रत्यञ्चो यन्तु निगुतः पुनस्तेऽमैषां चित्तं प्रबुधा विनेशत्॥ धाता धातृणां भुवनस्य यस्पतिर्देव सवितारमभिमातिषाहम्। इमं यज्ञमश्विनोभा बृहस्पतिर्देवाः

---

१. तै.सं ४-७-१४

पान्तु यजमानं न्यर्थात ॥ उरुव्यचा नो महिषः शर्म यꣳसदस्मिन् हवे पुरुहूतः पुरुक्षु । स नः प्रजायै हर्यश्व मृडयेन्द्र मा नो रीरिषो मा परा दाः ॥ ये नः सपत्ना अप ते भवन्त्विद्राग्निभ्यामव बाधामहे तान् । वसवो रुद्रा आदित्या उपरिस्पृशं मोग्रञ्चेत्तारमधि राजमक्रन् ॥ अर्वाञ्चमिन्द्रममुतो हवामहे यो गोजिद्धनजिदश्व जिद्यः । इमं नो यज्ञं विहवे जुषस्वास्य कुर्मो हरिवो मेदिनं त्वा ॥

[१]अग्नेर्मन्वे प्रथमस्य प्रचेतसो यं पाञ्चजन्यं बहवः समिन्धते । विश्वस्यां विशि प्रविविशिवाꣳसमीमहे स नो मुञ्चत्वꣳहसः ॥ यस्येदं प्राण न्निमिषद्यदेजति यस्य जातं जनमानञ्च केवलम् । स्तौम्यग्निं नाथितो जोहवीमि स नो मुञ्चत्वꣳहसः ॥ इन्द्रस्य मन्ये प्रथमस्य प्रचेतसो वृत्रघ्नः स्तोमा उप मामुपागुः । यो दाशुषः सुकृतो हवमुप गन्ता स नो मुञ्चत्वꣳहसः ॥ य. सङ्ग्रामं नयति सं वशी युधे यः पुष्टानि सꣳसृजति त्रयाणि । स्तौमीन्द्रं नाथितो जोहवीमि स नो मुञ्चत्वꣳहसः ॥ मन्वे वां मित्रावरुणा तस्य वित्तꣳ सत्यौजसा दृꣳहणायन्नुदेथे । या राजानꣳ सरथं याथ उग्रा ता नो मुञ्चतमागसः ॥ यो वाꣳ रथ ऋजुरश्मिः सत्यधर्मा मिथुश्चरन्तमुपयाति दूषयन्न् । स्तौमि मित्रावरुणा नाथितो जोहवीमि तौ नो मुञ्चतमागसः ॥ वायोः सवितुर्विदथानि मन्महे यावात्मन्वद्बिभृतो यौ च रक्षतः । यौ विश्वस्य परिभू बभूवतुस्तौ नो मुञ्चतमागसः ॥ उप श्रेष्ठा न आशिषो देवयोर्धर्मे अस्थिरन्न् । स्तौमि वायुꣳ सवितारं नाथितो जोहवीमि तौ नो

---

१. तै.सं. ४-७-१५

मुञ्चतमागसः ॥ रथीतमौ रथीनामह्व ऊतये शुभङ्गमिष्ठौ सुयमेभिरश्वैः । ययोर्वां देवौ देवेष्वनिशितमोजस्तौ नो मुञ्चतमागसः ॥ यदयातं वहतुꣳ सूर्यायास्त्रिचक्रेण सꣳसदमिच्छमानौ । स्तौमि देवावश्विनौ नाथितो जोहवीमि तौ नो मुञ्चतमागसः । मरुतां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तु विश्वे । आशून् हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः ॥ तिग्ममायुधं वीडितꣳ सहस्वद्दिव्यꣳ शर्धः पृतनासु जिष्णु । स्तौमि देवान्मरुतो नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः ॥ देवानां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तु विश्वे । आशून् हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः ॥ यदिदं माऽभिशोचति पौरुषेयेण दैव्येन । स्तौमि विश्वान्देवान्नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः ॥ अनु नोऽद्यानुमतिर्यज्ञं देवेषु मन्यताम् । अग्निश्च हव्यवाहनो भवतां दाशुषे मयः ॥ अन्विदनुमते त्वं मन्यासै शञ्च नः कृधि । क्रत्वे दक्षाय नो हिनु प्र ण आयूꣳषि तारिषः ॥ वैश्वानरो न ऊत्या प्रयातु परावतः । अग्निरुक्थेन वाहसा ॥ पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश । वैश्वानरस्सहसा पृष्टो अग्निः स नो दिवा स रिषः पातु नक्तम् ॥ ये अप्रथेताममितेभिरोजोभिर्ये प्रतिष्ठे अभवतां वसूनाम् । स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमꣳहसः ॥ उर्वी रोदसी वरिवः कृणोतं क्षेत्रस्य पत्नी अधि नो ब्रूयातम् । स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमꣳहसः ॥ यत्ते वयं पुरुषत्रा यविष्ठाविद्वाꣳसश्चकृमा कच्चनाऽऽगः । कृधी स्वस्माꣳ अदितेरनागा व्येनाꣳसि शिश्रथो विष्वगग्ने ॥ यथा ह तद्वसवो गौर्यञ्चित्पदि षिताममुञ्चता यजत्राः । एवा त्वमस्मत्प्रमुञ्चा व्यꣳहः प्रातार्यग्ने प्रतरान्न आयुः ॥

[१]समिद्धो अञ्जन्कृदरं मतीनां घृतमग्ने मधुमत्पिन्वमानः। वाजी वहन्वाजिनंजातवेदो देवानां वक्षि प्रियमा सधस्थम्॥ घृतेनाञ्जन्त्सम्पथो देवयानांन्प्रजानन्वाज्यप्येतु देवान्। अनु त्वा सप्ते प्रदिशः सचन्ताꣳ स्वधामस्मै यजमानाय धेहि॥ ईड्यश्चासि वन्द्यश्च वाजिन्नाशुश्चासि मेध्यश्च सप्ते। अग्निष्ट्वा देवैर्वसुभिः सजोषाः प्रीतं वह्निं वहतु जातवेदाः॥ स्तीर्णं बर्हिः सुष्टरीमा जुषाणोरु पृथु प्रथमानं पृथिव्याम्। देवेभिर्युक्तमदितिः सजोषाः स्योनं कृण्वाना सुविते दधातु॥ एता उ वः सुभगा विश्वरूपा वि पक्षोभिः श्रयमाणा उदातैः। ऋष्वाः सतीः कवषः शुम्भमाना द्वारो देवीः सुप्रायणा भवन्तु॥ अन्तरा मित्रावरुणा चरन्ती मुखं यज्ञानामभि संविदाने। उषासा वाꣳ सुहिरण्ये सुशिल्पे ऋतस्य योनाविह सादयामि॥ प्रथमा वाꣳ सरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि विश्वा। अपिप्रयञ्चोदना वां मिमाना होतारा ज्योतिः प्रदिशा दिशन्ता॥ आदित्यैर्नो भारती वष्टु यज्ञꣳ सरस्वती सह रुद्रैर्न आवीत्। इडोपहूता वसुभिः सजोषा यज्ञं नो देवीरमृतेषु धत्त॥ त्वष्टा वीरं देवकामं जजान त्वष्टुरर्वा जायत आशुरश्वः। त्वष्टेदं विश्वं भुवनं जजान बहोः कर्तारमिह यक्षि होतः॥ अश्वो घृतेन त्मन्या समक्त उप देवाꣳ ऋतुशः पाथ एतु। वनस्पतिर्देवलोकं प्रजानन्नग्निना हव्या स्वदितानि वक्षत्॥ प्रजापतेस्तपसा वावृधानस्सद्यो जातो दधिषे यज्ञमग्ने। स्वाहाकृतेन हविषा पुरोगा याहि साध्या हविरदन्तु देवाः॥

[२]प्रजापतिः सोमꣳ राजानमसृजत। तं त्रयो वेदा अन्वसृज्यन्त। तान्

---

१. तै.सं. ५-१-११ २. तै.ब्रा. २-३-१०

हस्तेऽकुरुत । अथ ह सीतां सावित्री । सोमं राजानं चकमे । श्रद्धामु स चकमे । सा ह पितरं प्रजापतिमुपससार । तं होवाच । नमस्ते अस्तु भगवः । उप त्वाऽयानि ॥ प्र त्वां पद्ये । सोमं वै राजानं कामये । श्रद्धामु स कामयत इति । तस्यां उ ह स्थागरमलंकारं कल्पयित्वा । दशहोतारं पुरस्ताद्व्याख्याय । चतुर्होतारं दक्षिणतः । पञ्चहोतारं पश्चात् । षड्ढोतार-मुत्तरतः । सप्तहोतारमुपरिष्टात् । सम्भारैश्च पत्निभिश्च मुखेऽलंकृत्य ॥ आऽस्यार्धं वव्राज । तां होदीक्ष्योवाच । उप मा वर्तस्वेति । तं होवाच । भोगन्तु म आचक्ष्व । एतन्म आचक्ष्व । यत्ते पाणाविति । तस्यां उ ह त्रीन् वेदान्प्रददौ । तस्मादु ह स्त्रियो भोगमैव हारयन्ते । स यः कामयेत प्रियः स्यामिति ॥ यं वा कामयेत प्रियः स्यादिति । तस्मा एतं स्थागरमलङ्कारं कल्पयित्वा । दशहोतारं पुरस्ताद्व्याख्याय । चतुर्होतारं दक्षिणतः । पञ्चहोतारं पश्चात् । षड्ढोतारमुत्तरतः । सप्तहोतारमुपरिष्टात् । सम्भारैश्च पत्निभिश्च मुखेऽलंकृत्य । आस्यार्धं व्रजेत् । प्रियो हैव भवति ॥

[१]ब्रह्मात्मन्वदसृजत । तदकामयत । समात्मना पद्येयेति । आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै दशमं हूतः प्रत्यशृणोत् । स दशहूतोऽभवत् । दशहूतो ह वै नामैषः । तं वा एतं दशहूतं सन्तम् । दशहोतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः ॥ आत्मन्नात्मन्नित्या-मन्त्रयत । तस्मै सप्तमं हूतः प्रत्यशृणोत् । स सप्तहूतोऽभवत् । सप्तहूतो ह वै नामैषः । तं वा एतं सप्तहूतं सन्तम् । सप्तहोतेत्या चक्षते परोक्षेण ।

१. तै.ब्रा. २-३-११

परोक्षंप्रिया इवहि देवाः। आत्मन्नात्मन्नित्यामंन्त्रयत। तस्मैं षष्ठꣳ हूतः प्रत्यंश्रृणोत्। स षड्ढूंतोऽभवत्॥ षड्ढूतो ह वै नामैषः। तं वा एतꣳ षड्ढूंतꣳ सन्तंम्। षड्ढोतेत्या चंक्षते परोक्षेंण। परोक्षंप्रिया इव हि देवाः। आत्मन्नात्मन्नित्यामंन्त्रयत। तस्मैं पञ्चमꣳ हूतः प्रत्यंश्रृणोत्। स पञ्चंहूतोऽभवत्। पञ्चंहूतो ह वै नामैषः। तं वा एतं पञ्चंहूतꣳ सन्तंम्। पञ्चंहोतेत्याचंक्षते परोक्षेंण॥ परोक्षंप्रिया इव हि देवाः। आत्मन्नात्मन्नित्यामंन्त्रयत। तस्मैं चतुर्थꣳ हूतः प्रत्यंश्रृणोत्। स चतुंर्हूतोऽभवत्। चतुंर्हूतो हवै नामैषः। तं वा एतं चतुंर्हूतꣳ सन्तंम्। चतुंर्होतेत्याचंक्षते परोक्षेंण। परोक्षंप्रिया इव हि देवाः। तमंब्रवीत्। त्वं वै मे नेदिंष्ठꣳ हूतः प्रत्यंश्रौषीः॥ त्वयैंनानाख्यातार इतिं। तस्मान्नु हैनाꣳ श्चतुंर्होतार इत्याचंक्षते। तस्मांच्छुश्रूषुः पुत्राणाꣳ हृद्यंतमः। नेदिंष्ठो हृद्यंतमः। नेदिंष्ठो ब्रह्मंणो भवति। य एवं वेदं॥

[१]सिꣳहे व्याघ्र उत या पृदांकौ। त्विषिंरग्नौ ब्राँह्मणे सूर्ये या। इन्द्रं या देवी सुभगां जजानं। सा न आगन्वर्चंसा संविदाना॥ या राजन्यें दुन्दुभावायंतायाम्। अश्वंस्य क्रन्द्ये पुरुंषस्य मायौ। इन्द्रं या देवी सुभगां जजानं। सा न आगन्वर्चंसा संविदाना॥ या हस्तिनिं द्वीपिनि या हिरंण्ये। त्विषिरश्वेंषु पुरुंषेषु गोषुं। इन्द्रं या देवी सुभगां जजानं। सा न आगन्वर्चंसा संविदाना॥ रथें अक्षेषुं वृषभस्य वाजें। वातें पर्जन्ये वरुंणस्य शुष्में। इन्द्रं या देवी सुभगां जजानं। सा न आगन्वर्चंसा संविदाना॥ राडंसि विराडंसि।

---

१. तै.ब्रा. २-७-७.

सम्राडसि स्वराडसि। इन्द्राय त्वा तेजस्वते तेजस्वन्तꣳ श्रीणामि। इन्द्राय त्वौजस्वत ओजस्वन्तꣳश्रीणामि। इन्द्राय त्वा पयस्वते पयस्वन्तꣳ श्रीणामि। इन्द्राय त्वाऽऽयुष्मत आयुष्मन्तꣳ श्रीणामि। तेजोऽसि। तत्ते प्रयच्छामि। तेजस्वदस्तु मे मुखम्। तेजस्वच्छिरो अस्तु मे। तेजस्वान् विश्वतः प्रत्यङ्ङ्। तेजसा सम्पिपृग्धि मा। ओजोऽसि। तत्ते प्रयच्छामि। ओजस्वदस्तु मे मुखम्। ओजस्वच्छिरो अस्तु मे। ओजस्वान् विश्वतः प्रत्यङ्ङ्। ओजसा सम्पिपृग्धि मा। पयोऽसि। तत्ते प्रयच्छामि। पयस्वदस्तु मे मुखम्। पयस्वच्छिरो अस्तु मे। पयस्वान् विश्वतः प्रत्यङ्ङ्। पयसा सम्पिपृग्धि मा। आयुरसि। तत्ते प्रयच्छामि। आयुष्मदस्तु मे मुखम्। आयुष्मच्छिरो अस्तु मे। आयुष्मान् विश्वतः प्रत्यङ्ङ्। आयुषा सम्पिपृग्धि मा। इममग्न आयुषे वर्चसे कृधि। प्रियꣳरेतो वरुण सोम राजन्। मातेवास्मा अदिते शर्म यच्छ। विश्वे देवा जरदष्टिर्यथा सत्। आयुरसि विश्वायुरसि। सर्वायुरसि सर्वमायुरसि। यतो वातो मनोजवाः। यतः क्षरन्ति सिन्धवः। तासान्त्वा सर्वासाꣳ रुचा। अभिषिञ्चामि वर्चसा। समुद्र इवासि गह्मना। सोम इवास्यदाभ्यः। अग्निरिव विश्वतः प्रत्यङ्ङ्। सूर्य इव ज्योतिषा विभूः। अपां यो द्रवणे रसः। तमहमस्मा आमुष्यायणाय। तेजसे ब्रह्मवर्चसाय गृह्णामि। अपां य ऊर्मौ रसः। तमहमस्मा आमुष्यायणाय। ओजसे वीर्याय गृह्णामि। अपां यो मध्यतो रसः। तमहमस्मा आमुष्यायणाय। पुष्ट्यै प्रजननाय गृह्णामि। अपां यो यज्ञियो रसः। तमहमस्मा आमुष्यायणाय। आयुषे दीर्घायुत्वाय गृह्णामि॥

# राक्षोघ्नम्

धूम्राक्ष ऋषिः। गायत्री छन्दः। रक्षोहाऽग्निर्देवता॥ ॐ रक्षोहणं वाजिनमाऽऽजिंघर्मि मित्रं प्रथिंष्ठमुपंयामि शर्मं। हृदयाय नमः॥ शिशांनो अग्निः क्रतुंभिः समिंद्धः स नो दिवा स रिषः पांतु नक्तंम्। शिरसे स्वाहा॥ वि ज्योतिंषा बृहता भांत्यग्निराविर्विश्वांनि कृणुते महित्वा। शिखायै वषट्॥ प्रादेंवीर्मायाः संहते दुरेवाः शिशींते शृङ्गे रक्षंसे विनिक्षें। कवचाय हुम्॥ उत स्वानासों दिवि षंन्त्वग्नेस्तिग्मायुंधा रक्षंसे हन्तवा उं। नेत्रत्रयाय वौषट्॥ मदें चिदस्य प्र रुंजन्ति भामा न वंरन्ते परि बाधो अदेंवीः। अस्त्राय फट्॥

त्रिशूलं परशुं चैव कपालं डमरुं तथा। बिभ्राणमुग्रवपुषं त्रिनेत्रं चन्द्रशेखरम्। दंष्ट्राकरालविलसद्भ्रुकुटीकुटिलाननम्। वडवाग्निसमाकारं दहन्तं भुवनत्रयम्। भूतप्रेतपिशाचादीन् भक्षयन्तं महाप्रभुम्। एवं ध्यात्वा जपेन्नित्यं रक्षोहाऽग्निं समाहितः॥ मम समस्तभूतप्रेतपिशाचबाधानिवारणार्थे जपे विनियोगः॥

कुबेर ते मुखं रौद्रं नन्दिन्नानन्दमावह। ज्वरमृत्यु भयं घोरं विषं नाशय मे ज्वरम्॥ याश्चेदमुंप शृण्वन्ति याश्च दूरं परांगताः। इह सङ्गत्य ताः सर्वा अस्मै सन्दंत्त भेषजम्॥ मा वों रिषत्खनिता यस्मैं चाहं खनांमि वः। द्विपच्चतुंष्पदस्माकऽ सर्वमस्त्वनांतुरम्॥ ओषंधयः संवंदन्ते सोमेंन सह राज्ञां। यस्मैं करोतिं ब्राह्मणस्तऽ रांजन्पारयामसि॥ दहाशसों रक्षसंः पाह्यंस्मान्द्रुहो निदो मिंत्रमहो अवद्यात्॥ रक्षोहणं वाजिनमाजिंघर्मि मित्रं प्रथिंष्ठमुपंयामि शर्मं। शिशांनो अग्निः क्रतुंभिः समिंद्धः स नो दिवा स रिषः पांतु नक्तंम्॥ विज्योतिंषा बृहता भांत्यग्निराविर्विश्वांनि कृणुते महित्वा।

प्रादेंवीर्मायाः संहते दुरेवाः शिशींते शृङ्गे रक्षंसे विनिक्षें ॥ उत स्वानासो दिविषंत्वग्नेस्तिग्मायुंधा रक्षंसे हन्तवा उं। मदेंचिदस्य प्र रुंजन्ति भामा न वंरन्ते परिबाधो अदेंवीः ॥

[१]कृणुष्व पाजः प्रसिंतिं न पृथ्वीं याहि राजेवामंवा॒ इभेंन । तृष्वीमनु प्रसिंतिं द्रूणानोऽस्तांसि विध्यं रक्षसस्तपिंष्ठैः ॥ तवं भ्रमासं आशुया पंतन्त्यनुंस्पृश धृषता शोशुंचानः । तपूं॒ष्यग्ने जुह्वां पतङ्गानसंन्दितो विसृंज विष्वंगुल्काः ॥ प्रति स्पशो विसृंज तूर्णिंतमो भवां पायुर्विशो अस्या अदंब्धः । यो नों दूरे अघशं॒सो यो अन्त्यग्ने माकिंष्टे व्यथिरादंधर्षीत् ॥ उदंग्ने तिष्ठ प्रत्यातंनुष्व न्यंमित्रां॒ ओषतात्तिग्महेते । यो नो अरांति॒ समिधान चक्रे नीचा तन्धंक्ष्यतसं न शुष्कंम् ॥ ऊर्ध्वो भंव प्रतिंविध्या-ध्यस्मदाविष्कृंणुष्व दैव्यांन्यग्ने । अवंस्थिरा तंनुहि यातुजूनां जामिमजांमिं प्रमृंणीहि शत्रूंन् ॥ स तें जानाति सुमतिं यंविष्ठ य ईवंते ब्रह्मंणे गातुमैरंत् । विश्वांन्यस्मै सुदिनांनि रायो द्युम्नान्यर्यो वि दुरों अभि द्यौंत् ॥ सेदंग्ने अस्तु सुभगंः सुदानुर्यस्त्वा नित्येंन हविषा य उक्थैः । पिप्रींषति स्व आयुंषि दुरोणे विश्वेदंस्मै सुदिना सासंदिष्टिः ॥ अर्चांमि ते सुमतिं घोष्यर्वाक्सन्तें वावातां जरतामियङ्गीः । स्वश्वांस्त्वा सुरथां मर्जयेमास्मे क्षत्राणिं धारयेरनु द्यून् ॥ इह त्वा भूर्याचंरेदुपत्मन्दोषांवस्तर्दीदिवा॒समनु द्यून् । क्रीडंन्तस्त्वा सुमनंसः सपेमाभि द्युम्ना तंस्थिवा॒सो जनांनाम् ॥ यस्त्वा स्वश्वंः सुहिरण्यो अंग्न उपयाति वसुंमता रथेंन । तस्यं त्राता भंवसि तस्य सखा यस्तं

---

१. तै.सं. १-२-१४.

आतिथ्यमानुषग्जुजोषत् ॥ महो रुजामि बन्धुता वचोभिस्तन्मा पितुर्गोतमा-दन्वियाय । त्वं नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः ॥ अस्वप्नजस्तरणयः सुशेवा अतन्द्रासोऽवृका अश्रमिष्ठाः । ते पायवः सध्रियञ्चो निषद्याग्ने तव नः पान्त्वमूर ॥ ये पायवो मामतेयन्ते अग्ने पश्यन्तो अन्धन्दुरितादरक्षन्न् । ररक्ष तान्त्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो ना ह देभुः ॥ त्वया वयꣳ सधन्यस्त्वोतास्तव प्रणीत्यश्याम वाजान् । उभा शꣳसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण ॥ अया ते अग्ने समिधा विधेम प्रति स्तोमꣳ शस्यमानं गृभाय । दहाशसो रक्षसः पाह्यस्मान्द्रुहो निदो मित्रमहो अवद्यात् ॥ रक्षोहणं वाजिनमाजिघर्मि मित्रं प्रथिष्ठमुपयामि शर्म । शिशानो अग्निः क्रतुभिः समिद्धस्स नो दिवा स रिषः पातु नक्तम् ॥ वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा । प्रादेवीर्मायास्सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे ॥ उत स्वानासो दिविषन्त्वग्नेस्ति-ग्मायुधा रक्षसे हन्तवा उ । मदेचिदस्य प्र रुजन्ति भामा न वरन्ते परिबाधो अदेवीः ॥

[1]ये देवाः पुरःसदोऽग्निनेत्रा दक्षिणसदो यमनेत्राः पश्चात्सदः सवितृनेत्रा उत्तरसदो वरुणनेत्रा उपरिषदो बृहस्पतिनेत्रा रक्षोहणस्ते नः पान्तु तेनोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा समूढꣳ रक्षः सन्दग्धꣳ रक्षः इदमहꣳ रक्षोऽभिसन्दहाम्यग्नये रक्षोघ्ने स्वाहा यमाय सवित्रे वरुणाय बृहस्पतये दुवस्वते रक्षोघ्ने स्वाहा प्रष्टिवाही रथो दक्षिणा देवस्य त्वा सवितुः

---

१. तै० सं० १-८-७-१

प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ रक्षसो वधं जुहोमि हतꣳ रक्षोऽवधिष्म रक्षो यद्वस्ते तद्दक्षिणा ॥

मरीचिः कश्यप ऋषिः । त्रिष्टुप् छन्दः । दुर्गा देवता ॥ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरिताऽत्यग्निः ॥ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् । दुर्गां देवीꣳ शरणमहं प्रपद्ये सुतरसि तरसे नमः ॥ अग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः ॥ विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरिताऽतिपर्षि । अग्ने अत्रिवन्मनसा गृणानोऽस्माकं बोध्यविता तनूनाम् ॥ पृतनाजितꣳ सहमानमुग्रमग्निꣳ हुवेम परमात्सधस्थात् । स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अति दुरिताऽत्यग्निः ॥ प्रत्नोषि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि । स्वां चाऽग्ने तनुवं पिप्रयस्वास्मभ्यं च सौभगमायजस्व ॥ गोभिर्जुष्टमयुजो निषिक्तं तवेन्द्र विष्णोरनुसञ्चरेम । नाकस्य पृष्ठमभि संवसानो वैष्णवीलोक इह मादयन्ताम् ॥

[१]भूतेष्टका उपदधात्यत्रात्र वै मृत्युर्जायते यत्र यत्रैव मृत्युर्जायते तत एवैनमवयजते तस्मादग्निचित्सर्वमायुरेति सर्वे ह्यस्य मृत्यवोऽवेष्टास्तस्मा-दग्निचिन्नाभि चरितवै प्रत्यगेनमभिचारस्तृणुते सूयते वा एष योऽग्निं चिनुते देवसुवामेतानि हवीꣳषि भवन्त्येतावन्तो वै देवानाꣳ सवास्त एव ॥

---

१ तै॰ सं॰ ५-६-३

[1]सर्वेषु वा एषु लोकेषु मृत्यवोऽन्वायत्ताः । तेभ्यो यदाहुतीर्न जुहुयात् । लोकेलोक एनं मृत्युर्विन्देत् । मृत्यवे स्वाहा मृत्यवे स्वाहेत्यभिपूर्व-माहुतीर्जुहोति । लोकाल्लोकादेव मृत्युमवयजते । नैनं लोके लोके मृत्युर्विन्दति । यदमुष्मै स्वाहामुष्मै स्वाहेति जुहुयात्संचक्षीत । बहुं मृत्युममित्रं कुर्वीत । मृत्यवे स्वाहेत्येकस्मा एवैकां जुहुयात् । एको वा अमुष्मिंल्लोके मृत्युः ॥ अशनया मृत्युरेव । तमेवामुष्मिंल्लोकेऽवयजते । भ्रूणहत्यायै स्वाहेत्यवभृथ आहुतिं जुहोति । भ्रूणहत्यामेवावयजते । तदाहुः । यद्भ्रूणहत्या पात्र्यार्थं । कस्माद्यज्ञेऽपि क्रियत इति । अमृत्युर्वा अन्यो भ्रूणहत्याया इत्याहुः । भ्रूणहत्या वाव मृत्युरिति । यद्भ्रूणहत्यायै स्वाहेत्यवभृथ आहुतिं जुहोति ॥ मृत्युमेवाहुत्या तर्पयित्वा परिपाणं कृत्वा । भ्रूणघ्ने भेषजं करोति । एता ह वै मुण्डिभ औदन्यवः । भ्रूणहत्यायै प्रायश्चित्तिं विदाञ्चकार । यो हास्यापि प्रजायां ब्राह्मण हन्ति । सर्वस्मै तस्मै भेषजं करोति । जुम्बकाय स्वाहेत्यवभृथ उत्तमामाहुतिं जुहोति । वरुणो वै जुम्बकः । अन्तत एव वरुणमवयजते । खलतेर्विक्लिधस्य शुक्लस्य पिङ्गाक्षस्य मूर्धञ्जुहोति । एतद्वै वरुणस्य रूपम् । रूपेणैव वरुणमवयजते ॥

[2]चक्षुषो हेते मनसो हेते । वाचो हेते ब्रह्मणो हेते । यो माऽघायुरभिदासति । तमग्ने मेन्याऽऽमेनिं कृणु । यो मा चक्षुषा यो मनसा । यो वाचा ब्रह्मणाऽघायुरभिदासति । तयाऽग्ने त्वं मेन्या । अमुममेनिं कृणु । यत्किञ्चासौ मनसा यच्च वाचा । यज्ञैर्जुहोति यजुषा हविर्भिः ॥

---

१. तै.ब्रा. ३-९-१५. २. तै.ब्रा. २-४-२.

तन्मृत्युर्निर्ऋत्या संविदानः। पुराऽऽदिष्टादाहुतीरस्य हन्तु। यातुधाना निर्ऋतिरादु रक्षः। ते अस्य घ्नन्त्वनृतेन सत्यम्। इन्द्रेषिता आज्यमस्य मथ्नन्तु। मा तत्समृद्धि यदसौ करोति। हन्मि तेऽहं कृतꣳ हविः। यो मे घोरमचीकृतः। अपाञ्चौ त उभौ बाहू। अपनह्याम्यास्यम्॥ अपनह्यामि ते बाहू। अपनह्याम्यास्यम्। अग्नेर्देवस्य ब्रह्मणा। सर्वं तेऽवधिषं कृतम्। पुराऽमुष्य वषट्कारात्। यज्ञं देवेषु नस्कृधि। स्विष्टमस्माकं भूयात्। माऽस्मान्प्रापन्नरातयः। अन्ति दूरे सतो अग्ने। भ्रातृव्यस्याभिदासतः॥ वषट्कारेण वज्रेण। कृत्याꣳ हन्मि कृतामहम्। यो मा नक्तं दिवा सायम्। प्रातश्चाह्नो निपीयति। अद्या तमिन्द्र वज्रेण। भ्रातृव्यम्पादयामसि॥

[1]कृत्तिका नक्षत्रमग्निर्देवताऽग्नेरुचः स्थ प्रजापतेर्धातुः सोमस्यर्चे त्वा रुचे त्वा द्युते त्वा भासे त्वा ज्योतिषे त्वा रोहिणी नक्षत्रं प्रजपतिर्देवता मृगशीर्षं नक्षत्रꣳ सोमो देवताऽऽर्द्रा नक्षत्रꣳ रुद्रो देवता पुनर्वसू नक्षत्रमदितिर्देवता तिष्यो नक्षत्रं बृहस्पतिर्देवताऽऽश्रेषानक्षत्रꣳ सर्पा देवता मघा नक्षत्रं पितरो देवता फल्गुनी नक्षत्रमर्यमा देवता फल्गुनी नक्षत्रं भगो देवता हस्तो नक्षत्रꣳ सविता देवता चित्रा नक्षत्रमिन्द्रो देवता स्वाती नक्षत्रं वायुर्देवता विशाखे नक्षत्रमिन्द्राग्नी देवताऽऽनूराधा नक्षत्रं मित्रो देवता रोहिणी नक्षत्रमिन्द्रो देवता विचृतौ नक्षत्रं पितरो देवताऽषाढानक्षत्रमापो देवताऽषाढा नक्षत्रं विश्वेदेवा देवता श्रोणा नक्षत्रं विष्णुर्देवता श्रविष्ठा नक्षत्रं वसवो देवता शतभिषङ्नक्षत्रमिन्द्रो देवता प्रोष्ठपदा नक्षत्रमज एकपाद्देवता

---

प्रोष्ठपदा नक्षंत्रमहिर्बुध्नियो देवता रेवती नक्षंत्रं पूषा देवताश्वयुजौ नक्षंत्रमश्विनौ देवताऽपभरंणीर्नक्षंत्रं यमो देवता पूर्णा पश्चाद्यत्ते देवा अदंधुः ॥

[१]मधुंश्च माधंवश्च वासंन्तिकावृतू शुक्रश्च शुचिंश्च ग्रैष्मांवृतू नभंश्च नभस्यंश्च वार्षिकावृतू इषश्चोर्जश्चं शारदावृतू सहंश्च सहस्यंश्च हैमंन्तिकावृतू तपंश्च तपस्यंश्च शैशिरावृतू अग्नेरंन्तः श्रेषोंऽसि कल्पेतां द्यावांपृथिवी कल्पंन्तामाप ओषंधीः कल्पंन्तामग्नयः पृथङ्मम ज्यैष्ठ्यांय सव्रंताः ॥

[२]समिद्दिशामाशयांनः सुवर्विन्मधोरतो माधंवः पात्वस्मान् । अग्निर्देवो दुष्टरींतुरदांभ्य इदं क्षत्रꣳ रंक्षतु पात्वस्मान् ॥ रथन्तरꣳ सामंभिः पात्वस्मान्गांयत्री छन्दंसां विश्वरूंपा । त्रिवृन्नों विष्ठया स्तोमो अह्नांꣳ समुद्रो वातं इदमोजंः पिपर्तु ॥ उग्रा दिशामभिभूंतिर्वयोधाः शुचिंः शुक्रे अहंन्योजसीनां । इन्द्राधिंपतिः पिपृतादतो नो महिं क्षत्रं विश्वतो धारयेदम् ॥ बृहत्सामं क्षत्रभृद्वृद्धवृंष्णियं त्रिष्टुभौजंः शुभितमुग्रवीरम् । इन्द्रस्तोमैन पञ्चदशेन मध्यंमिदं वातैन सगरेण रक्ष ॥

वैवस्वत ऋषिः । जगती छन्दः । अभयङ्करेन्द्रो देवता ॥ यतं इन्द्र भयांमहे । हृदयाय नमः ॥ ततो नो अभंयं कृधि । शिरसे स्वाहा ॥ म घंवञ्छग्धि तव तन्नं ऊतयें । शिखायै वषट् ॥ वि द्विषो विमृधों जहि । कवचाय हुम् ॥ स्वस्तिदा विशस्पतिंर्वृत्रहा विमृधो वशी । नेत्रत्रयाय वौषट् ॥ वृषेन्द्रंः पुर एंतु नः स्वस्तिदा अंभयङ्करः । अस्त्राय फट् ॥

---

१. तै.सं. ४-४-११.    २. तै.सं. ४-४-१२.

अभयवरदहस्तं देवदेवं सुरेशं दनुजकुलविनाशं वज्रहस्तं त्रिनेत्रम्। विबुधवरसहायं संस्थितं होमकर्मण्यखिलभवविभूत्यै चिन्तयेदन्तकान्तम्। आरूढो वारणेन्द्रं दशशतनयनः शाड्वलः कोमलाङ्गो वीरैर्वण्यर्प्रतापः प्रति-भटदहनः प्रज्वलद्वज्रपाणिः। दोर्भिर्दिव्यायुधाढ्यैर्बहुभिरभिमतो देवसेनाधिनाथो दत्वाभीष्टानि शश्वत्परिहृतदुरितं पातु विश्वं महेन्द्रः ॥ यतं इन्द्र भयामहे ततो नो अभयङ्कृधि। मघवञ्छग्धि तव तन्नं ऊतये वि द्विषो वि मृधो जहि ॥ स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी। वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयङ्करः ॥

वसिष्ठ ऋषिः। अनुष्टुप् छन्दः। त्र्यम्बकरुद्रो देवता ॥ त्र्यम्बकम्। हृदयाय नमः ॥ यजामहे। शिरसे स्वाहा ॥ सुगन्धिं पुष्टिवर्धनम्। शिखायै वषट् ॥ उर्वारुकमिव बन्धनात्। कवचाय हुम् ॥ मृत्योर्मुक्षीय। नेत्रत्रयाय वौषट् ॥ मामृतात्। अस्त्राय फट् ॥ अच्छं स्वच्छारविन्दस्थितमुभयकरे संस्थितौ पूर्णकुम्भौ द्वाभ्यां वेदाक्षमाले निजकरकमलाभ्यां घटौ नित्यपूर्णौ। द्वाभ्यां तौ च स्रवन्तौ शिरसि शशिकलां चामृतैः प्लावयन्तं देहं देवो दधानः प्रदिशतु विशदां कल्पजालं श्रियं नः ॥ त्र्यम्बक महादेव त्राहि मां कृपया शिव। जन्ममृत्युजरारोगैः पीडितं कर्मबन्धनैः ॥ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥

कहोळ ऋषिः। गायत्री छन्दः। महामृत्युञ्जयरुद्रो देवता ॥ ॐ बीजम्। जूं शक्तिः। सः कीलकम्। मम मृत्युञ्जयप्रसादसिद्ध्यर्थे जपे विनियोगः ॥ ॐ सां अङ्गुष्ठिकाभ्यां नमः। हृदयाय नमः ॥ ॐ सीं

तर्जनीभ्यां नमः। शिरसे स्वाहा॥ ॐ सूं मध्यमाभ्यां नमः। शिखायै वषट्॥ ॐ सैं अनामिकाभ्यां नमः। कवचाय हुम्॥ ॐ सौं कनिष्ठिकाभ्यां नमः। नेत्रत्रयाय वौषट्॥ ॐ सः करतळकरपृष्ठाभ्यां नमः। अस्त्राय फट्॥

स्फुटितनलिनसंस्थं मौलिबद्धेन्दुरेखागलदमृतजलार्द्रं चन्द्रवह्न्यर्कनेत्रम्। स्वकरकलितमुद्रापाशवेदाक्षमालं स्फटिकरजतमुक्तागौरमीशं नमामि॥

चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मद्वयान्तः स्थितं मुद्रापाशमृगाक्षसूत्र-विलसत्पाणिं हिमांशु प्रभम्। कोटीरेन्दुगलत्सुधाप्लुततनुं हाराहिभूषोज्वलं कान्त्या विश्वविमोहनं पशुपतिं मृत्युञ्जयं भावये॥

अपैतु मृत्युरमृतं न आगंन्वैवस्वतो नो अभंयं कृणोतु। पुर्णं वनस्पतेरिवाऽभि नंः शीयता२ रयिः स चं तान्नः शची पतिः॥ परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतंरो देवयानांत्। चक्षुंष्मते शृण्वते तें ब्रवीमि मा नंः प्रजा२ रीरिषो मोत वीरान्॥ वातं प्राणं मनंसाऽन्वारंभामहे प्रजापंतिं यो भुवंनस्य गोपाः। स नों मृत्योस्त्रांयतां पात्व२हंसो ज्योग्जीवा जरामंशीमहि॥ अमुत्र भूयादध यद्यमस्य बृहंस्पते अभिशंस्तेरमुंञ्चः। प्रत्यौहतामश्विनांमृत्युमंस्माद्देवानांमग्ने भिषजा शचीभिः॥ हरि२ हरंन्तमनुं यन्ति देवा विश्वस्येशांनं बृषभं मंतीनाम्। ब्रह्म सरूंपमनुंमेदमागादयंनं मा विवंधीर्विक्रमस्व॥ शल्कैरग्नि-मिन्धान उभौ लोकौ संनेमहम्। उभयोंर्लोकयोंरृध्वाऽतिमृत्युं तंराम्यहम्॥ मा छिंदो मृत्यो मा वंधीर्मा मे बलं विवृंहो मा प्रमोंषीः। प्रजां मा में रीरिष आयुंरुग्र नृचक्षंसं त्वा हविषां विधेम॥ मा नों महान्तंमुत मा नों अर्भकं मा न उक्षंन्तमुत मा नं उक्षितम्। मा नों वधीः पितरं मोत मातरं प्रिया मा

नंस्तनुवों रुद्र रीरिषः ॥ मा नंस्तोके तनंये मा न आयुंषि मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नों रुद्र भामितोऽवंधीरहविष्मंन्तो नमंसा विधेम ते ॥ प्रजांपते न त्वदेतान्यन्यो विश्वां जातानि परि ता बंभूव । यत्कांमास्ते जुहुमस्तन्नों अस्तु वयꣳस्यांम पतंयो रयीणाम् ॥ स्वस्तिदा विशस्पतिर्वृत्रहा विमृधों वशी । वृषेन्द्रंः पुर एंतु नः स्वस्तिदा अंभयंकरः ॥ त्र्यंम्बकं यजामहे सुगन्धिं पुंष्टिवर्धंनम् । उर्वारुकमिंव बन्धंनान्मृत्योर्मुंक्षीय माऽमृतांत् ॥

[1]अपंमृत्युमप क्षुधंम् । अपेतः शपथं जहि । अधां नो अग्न आवंह । रायस्पोषंꣳ सहस्रिणंम् ॥ ये तें सहस्रंमयुतं पाशा मृत्यो मर्त्यांय हन्तंवे । तान्यज्ञस्यं मायया सर्वानवंयजामहे ॥ मृत्यवे स्वाहां मृत्यवे स्वाहां ॥

[2]ॐ भूर्भुवः स्वंः । ओजो बलंम् । ब्रह्मं क्षत्रम् । यशों महत् । सत्यं तपो नामं । रूपममृतंम् । चक्षुः श्रोत्रंम् । मन आयुंः । विश्वं यशों महः । समं तपो हरो भाः । जातवेंदा यदिं वा पावकोऽसिं । वैश्वानरो यदिं वा वैद्युतोऽसिं । शं प्रजाभ्यो यजंमानाय लोकम् । ऊर्जं पुष्टिं ददंदभ्यावंवृत्स्व ॥

भूः मृत्युर्नंश्यत्वायुर्वंर्धताम् । भुवंः मृत्युर्नंश्यत्वायुर्वंर्धताम् । सुवंः मृत्युर्नंश्यत्वायुर्वंर्धताम् । भूर्भुवः सुवंः । सकलकण्टकमपमृत्युर्नंश्यत्वायु-वंर्धताम् । श्रींर्मे भजतु । अलक्ष्मींर्मे नश्यतु ॥ आयुंरसि विश्वायुंरसि । सर्वायुंरसि सर्वमायुंरसि । सर्वं म आयुंर्भूयात् । सर्वमायुंर्गेषम् । भूर्भुवः सुवंः । अग्निर्धर्मंणान्नादः । मृत्युर्धर्मंणान्नंपतिः । ब्रह्मं क्षत्रꣳस्वाहां ॥

---

१. तै.ब्रा. ३-१०-८ २. तै.ब्रा. ३-१०-५

ये ये ग्रहाः प्रबाधन्ते देहस्थाः सततं मम। ते सर्वे मम नश्यन्तु अभयायुष्यमन्त्रतः॥ बृहत्सामं क्षत्रभृद्वृद्धवृष्णियं त्रिष्टुभौजः शुभितमुग्रवीरम्। इन्द्र स्तोमेन पञ्चदशेन मध्यमिदं वातेन सगरेण रक्ष॥ अग्निरायुष्मान्त्स वनस्पतिभिरायुष्मान्तेन त्वायुषाऽऽयुष्मन्तं करोमि॥ सोम आयुष्मान्त्स ओषधीभिरायुष्मान्तेन त्वायुषाऽऽयुष्मन्तं करोमि॥ यज्ञ आयुष्मान्त्स दक्षिणाभिरायुष्मान्तेन त्वायुषाऽऽयुष्मन्तं करोमि॥ ब्रह्मायुष्मत्तद्ब्राह्मणै-रायुष्मत्तेन त्वायुषाऽऽयुष्मन्तं करोमि॥ देवा आयुष्मन्तस्तेऽमृतेनायु-ष्मन्तस्तेन त्वायुषाऽऽयुष्मन्तं करोमि॥

[१]आशास्ते यं यजमानोऽसौ। आयुराशास्ते। सुप्रजास्त्वमाशास्ते। सजातवनस्यामाशास्ते। उत्तरां देवयज्यामाशास्ते। भूयो हविष्करण-माशास्ते। दिव्यं धामाशास्ते। विश्वं प्रियमाशास्ते। यदनेन हविषाऽऽशास्ते। तदश्यात्तदृध्यात्। तदस्मै देवा रासन्ताम्। तदग्निर्देवो देवेभ्यो वनते। वयमग्नेर्मानुषाः। इष्टं च वीतं च। उभे च नो द्यावापृथिवी अꣳहसस्पाताम्। इह गतिर्वामस्येदं च। नमो देवेभ्यः॥



१. तै.ब्रा. ३-५-१०.

# वास्तुसूक्तम्

ॐ वास्तोष्पते ध्रुवास्थूणाꣳ सत्रꣳ सोम्यानाम्। द्रप्सो भेत्ता पुराꣳ शश्वतीनामिन्द्रो मुनीनाꣳ सखा॥ गृह्यं भयं यच्चेद्द्विपात्सु यदु चेच्चतुष्पात्सु भयं यदस्ति। अग्निर्यविष्ठ्यः प्रणुदतु तद्भयꣳ शन्नः प्रजाभ्यः शमु नः पशुभ्यः॥ अक्षिस्पन्देऽङ्गचले च यद्भयं यद्वाशिते यदु चेद्रुते। अग्निर्यविष्ठ्यः प्रणुदतु तद्भयꣳ शन्नः प्रजाभ्यः शमु नः पशुभ्यः॥ दुस्स्वप्ने पापस्वप्ने च यद्भयꣳ स्वप्ना शंने यदमेध्यं दर्शने। अग्निर्यविष्ठ्यः प्रणुदतु तद्भयꣳ शन्नः प्रजाभ्यः शमु नः पशुभ्यः॥ वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो। अजरासस्ते सख्येस्याम पितेव पुत्रान्प्रतिनो जुषस्व॥ अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन्। सखा सुशेव एधि नः॥



# उदकशान्तिः

ॐ भूर्भुवःसुवः । तत्सवितुर्वरेण्यम् । भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥

[१]अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥

[२]इषे त्वोर्जे त्वा वायवस्स्थोपायवस्स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्निया देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मा मा वः स्तेन ईशत माघशꣳसो रुद्रस्य हेतिः परि वो वृणक्तु ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥

यज्ञस्य घोषदसि प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा त आवहन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे देवानां परिषूतमसि वर्षवृद्धमसि देवबर्हिर्मा त्वान्वङ्मा तिर्यक्पर्व ते राध्यासमाच्छेत्ता ते मारिषन्देवबर्हिः शतवल्शं विरोह सहस्रवल्शा वि वयꣳ रुहेम पृथिव्याः सम्पृचः पाहि सुसम्भृता त्वा सम्भराम्यदित्यै रास्नासीन्द्राण्यै सन्नहनं पूषा ते ग्रन्थिं ग्रथ्नातु स ते मास्थादिन्द्रस्य त्वा बाहुभ्यामुद्यच्छे बृहस्पतेर्मूर्ध्ना हराम्युर्वन्तरिक्षमन्विहि देवङ्गममसि ॥

---

१. ऋग्वेद संहिता १-१-१.   २ कृष्णयजुर्वेदः तैत्तिरीय संहिता १-१-१/३.

शुन्धध्वं दैव्याय कर्मणे देवयज्यायै मातरिश्वनो घर्मोऽसि द्यौरसि पृथिव्यसि विश्वधाया असि परमेण धाम्ना दृꣳहस्व माह्वार्वसूनां पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारꣳ हुतः स्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्याꣳ सा विश्वायुस्सा विश्वव्यचास्सा विश्वकर्मा सम्पृच्यध्वमृतावरीरूर्मिणीर्मधुमत्तमा मन्द्रा धनस्य सातये सोमेन त्वाऽऽतनच्मीन्द्राय दधि विष्णो हव्यꣳ रक्षस्व ॥

[१]अग्न आयाहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥

[२]शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभि स्रवन्तु नः ॥

[३]कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाꣳ इभेन । तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥ तव भ्रमास आशुया पतन्त्यनुस्पृश धृषता शोशुचानः । तपूꣳष्यग्ने जुह्वा पतङ्गानसन्दितो विसृज विष्वगुल्काः ॥ प्रति स्पशो विसृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः । यो नो दूरे अघशꣳसो यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ॥ उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राꣳ ओषतात्तिग्महेते । यो नो अरातिꣳ समिधान चक्रे नीचा तन्धक्ष्यतसं न शुष्कम् ॥ ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने । अवस्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून् ॥ स ते जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे

---

१. सामवेदः १-१-१.
२. अथर्ववेदः १-१-१.
३. तै. संहिता १-२-१४.

गातुमैरंत् । विश्वांन्यस्मै सुदिनांनि रायो द्युम्नान्यर्यो वि दुरों अभि द्यौंत् ॥ सेदंग्ने अस्तु सुभगंः सुदानुर्यस्त्वा नित्येंन हविषा य उक्थैः । पिप्रीषति स्व आयुंषि दुरोणे विश्वेदंस्मै सुदिना सासंदिष्टिः ॥ अर्चांमि ते सुमतिं घोष्यर्वाक्सन्तेंवावातां जरतामियङ्गीः । स्वश्वांस्त्वा सुरथां मर्जयेमास्मे क्षत्राणिं धारयेरनु द्यून् ॥ इह त्वा भूर्याचंरेदुपत्मन्दोषांवस्तर्दीदिवाꣳसमनु द्यून् । क्रीडंन्तस्त्वा सुमनंसः सपेमाभि द्युम्ना तंस्थिवाꣳसो जनांनाम् ॥ यस्त्वा स्वश्वंः सुहिरण्यो अंग्न उपयाति वसुंमता रथैंन । तस्यं त्राता भंवसि तस्य सखा यस्तं आतिथ्यमांनुषग्जुजोंषत् ॥ महो रुंजामि बन्धुता वचोंभिस्तन्मां पितुर्गोतंमादन्वियाय । त्वं नों अस्य वचंसश्चिकिद्धि होतंर्यविष्ठ सुक्रतो दमूंनाः ॥ अस्वंप्रजस्तरणंयः सुशेवा अतंन्द्रासोऽवृका अश्रंमिष्ठाः । ते पायवंः सध्रियंञ्चो निषद्याग्ने तवं नः पान्त्वमूर ॥ ये पायवों मामतेयन्तें अग्ने पश्यंन्तो अन्धन्दुंरितादरंक्षन्न् । ररक्ष तान्त्सुकृतों विश्ववेंदा दिप्संन्त इद्रिपवो ना हं देभुः ॥ त्वयां वयꣳ संधन्यंस्त्वोतास्तव प्रणींत्यश्याम वाजांन् । उभा शꣳसां सूदय सत्यतातेऽनुष्ठुया कृंणुह्यह्रयाण ॥ अया तें अग्ने समिधां विधेम प्रति स्तोमंꣳ शस्यमांनं गृभाय । दहाशसों रक्षसंः पाह्यंस्मान्द्रुहो निदो मिंत्रमहो अवद्यात् ॥ रक्षोहणं वाजिनमाजिंघर्मि मित्रं प्रथिंष्ठमुपंयामि शर्मं । शिशांनो अग्निः क्रतुंभिः समिंद्धस्स नो दिवा स रिषः पांतु नक्तंम् ॥ वि ज्योतिंषा बृहता भांत्यग्निराविर्विश्वांनि कृणुते महित्वा । प्रादेंवीर्मायास्संहते दुरेवाः शिशींते शृङ्गे रक्षंसे विनिक्षें ॥ उत स्वानासों दिविषंन्त्वग्नेस्तिग्मायुंधा रक्षंसे हन्तवा उं ।

[१]इन्द्रं वो विश्वतस्परि हवांमहे जनेंभ्यः। अस्माकंमस्तु केवंलः॥ इन्द्रन्नरों नेमधिंता हवन्ते यत्पार्यां युनजंते धियस्ताः। शूरो नृषांता शवंसश्चकान आ गोमंति व्रजे भंजा त्वन्नंः॥ इन्द्रियाणिं शतक्रतो या ते जनेंषु पञ्चसुं। इन्द्र तानिं त आ वृंणे॥ अनुं ते दायि मह इंन्द्रियायं सत्रा ते विश्वमनुं वृत्रहत्यें। अनुं क्षत्रमनु सहों यजत्रेन्द्रं देवेभिरनुं ते नृषह्यें॥ आ यस्मिंन्त्सप्त वांसवास्तिष्ठंन्ति स्वारुहों यथा। ऋषिंर् ह दीर्घश्रुत्तंम इन्द्रंस्य घर्मो अतिंथिः॥ आमासुं पक्वमैरंय आसूर्यं॰ रोहयो दिवि। घर्मं न सामंन्तपता सुवृक्तिभिर्जुष्टं गिर्वंणसे गिरंः॥ इन्द्रमिद्गाथिनों बृहदिन्द्रंमर्केभिंरर्किणंः। इन्द्रं वाणीरनूषत॥ गायंन्ति त्वा गायत्रिणोऽर्चंन्त्यर्कमर्किणंः। ब्रह्माणंस्त्वा शतक्रतवुद्वं॰शमिंव येमिरे॥ अ॰होमुचे प्र भंरेमा मनीषामोंषिष्ठदाव्ने सुमतिं गृंणानाः। इदमिंन्द्र प्रतिं हव्यं गृंभाय सत्यास्संन्तु यजंमानस्य कामांः॥ विवेष यन्मां धिषणां जजान स्तवै पुरा पार्यादिन्द्रमह्नंः। अ॰हंसो यत्रं पीपरद्यथां नो नावेव यान्तंमुभयें हवन्ते॥ प्र सम्राजं प्रथममंध्वराणांम॰होमुचं वृषभं यज्ञियांनाम्। अपान्नपांतमश्विना हयंन्तमस्मिन्नंर इन्द्रियं धंत्तमोजंः॥ वि नं इन्द्र मृधों जहि नीचा यंच्छ पृतन्यतः। अधस्पदं तमींङ्कधि यो अस्मा॰ अंभिदासंति॥ इन्द्रं क्षत्रमभि वाममोजोऽजांयथा वृषभ चर्षणीनाम्। अपांनुदो जनंममित्रयन्तंमुरुं देवेभ्यों अकृणोरु लोकम्॥ मृगो न भीमः कुंचरो गिंरिष्ठाः पंरावत आजंगामा परंस्याः। सृक॰ स॰शायं पविमिंन्द्र तिग्मं विशत्रूंन्ताढि विमृधों नुदस्व॥ वि शत्रून् वि मृधों नुद वि

१. तै.सं. १-६-१२.

वृत्रस्य हनूरुज। वि मन्युमिन्द्र भामितोऽमित्रस्याभिदासतः॥ त्रातारमिन्द्र-मवितारमिन्द्र९ हवेहवे सुहव९शूरमिन्द्रम्। हुवे नु शक्रं पुरुहूतमिन्द्र९ स्वस्ति नो मघवा धात्विन्द्रः॥ मा ते अस्या९ सहसावन्परिष्टावघाय भूम हरिवः परादै। त्रायस्व नोऽवृकेभिर्वरूथैस्तव प्रियासः सूरिषु स्याम॥ अनवस्ते रथमश्वाय तक्षन्त्वष्टा वज्रं पुरुहूत द्युमन्तम्। ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ॥ वृष्णे यत्ते वृषणो अर्कमर्चानिन्द्र ग्रावाणो अदितिः सजोषाः। अनश्वासो ये पवयोऽरथा इन्द्रेषिता अभ्यवर्तन्त दस्यून्॥

[१]यतं इन्द्र भयामहे ततो नो अभयं कृधि। मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि॥ स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी। वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयङ्करः॥ महा९ इन्द्रो वज्रबाहुः षोडशी शर्म यच्छतु। स्वस्ति नो मघवा करोतु हन्तु पाप्मानं योऽस्मान्द्वेष्टि॥ सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहञ्छूर विद्वान्। जहि शत्रू९ रपमृधो नुदस्वाथाभयं कृणुहि विश्वतो नः॥

[२]ये देवाः पुरस्सदोऽग्निनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा॥ ये देवा दक्षिणसदो यमनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यस्स्वाहा॥ ये देवाः पश्चात्सदः सवितृनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यस्स्वाहा॥ ये देवा उत्तरसदो वरुणनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यस्स्वाहा॥ ये देवा उपरिषदो बृहस्पतिनेत्रा रक्षोहणस्ते नः पान्तु ते

१. तै. उपनिषत् ४-१-१. २. तै.सं. १-८-७

नोऽवन्तु तेभ्यो नमस्तेभ्यस्स्वाहा ॥ अग्नये रक्षोघ्ने स्वाहा ॥ यमाय रक्षोघ्ने स्वाहा ॥ सवित्रे रक्षोघ्ने स्वाहा ॥ वरुणाय रक्षोघ्ने स्वाहा ॥ बृहस्पतये दुवस्वते रक्षोघ्ने स्वाहा ॥

[१]अग्निरायुष्मान्त्स वनस्पतिभिरायुष्मान्तेन त्वाऽऽयुषाऽऽयुष्मन्तङ्करोमि ॥ सोम आयुष्मान्त्स ओषधीभिरायुष्मान्तेन त्वाऽऽयुषाऽऽयुष्मन्तङ्करोमि ॥ यज्ञ आयुष्मान्त्स दक्षिणाभिरायुष्मान्तेन त्वाऽऽयुषाऽऽयुष्मन्तङ्करोमि ॥ ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वाऽऽयुषाऽऽयुष्मन्तङ्करोमि ॥ देवा आयुष्मन्तस्तेऽमृतेनायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तङ्करोमि ॥

[२]या वामिन्द्रावरुणा यतव्या तनूस्तयेममꣳहसो मुञ्चतम् ॥ या वामिन्द्रावरुणा सहस्या तनूस्तयेममꣳहसो मुञ्चतम् ॥ या वान्द्रावरुणा रक्षस्या तनूस्तयेममꣳहसो मुञ्चतम् । या वामिन्द्रावरुणा तेजस्या तनूस्तयेममꣳहसो मुञ्चतम् ॥ यो वामिन्द्रावरुणावग्नौ स्रामस्तं वामेतेनाव यजे ॥ यो वामिन्द्रावरुणा द्विपात्सु पशुषु स्रामस्तं वामेतेनाव यजे ॥ यो वामिन्द्रावरुणा चतुष्पात्सु पशुषु स्रामस्तं वामेतेनाव यजे ॥ यो वामिन्द्रावरुणा गोष्ठे स्रामस्तं वामेतेनाव यजे ॥ यो वामिन्द्रावरुणा गृहेषु स्रामस्तं वामेतेनाव यजे ॥ यो वामिन्द्रावरुणाप्सु स्रामस्तं वामेतेनाव यजे ॥ यो वामिन्द्रावरुणौषधीषु स्रामस्तं वामेतेनाव यजे ॥ यो वामिन्द्रावरुणा वनस्पतिषु स्रामस्तं वामेतेनाव यजे ॥

[1]अग्ने यशस्विन् यशसेममर्पयेन्द्रावतीमपचितीमिहाऽऽवह । अयं मूर्धा परमेष्ठी सुवर्चाः समानानामुत्तमश्लोको अस्तु ॥ भद्रं पश्यन्त उपसेदुरग्रे तपो दीक्षामृषयः सुवर्विदः । ततः क्षत्रं बलमोजश्च जातं तदस्मै देवा अभि सन्नमन्तु ॥ धाता विधाता परमो तसन्दृक्प्रजापतिः परमेष्ठी विराजा । स्तोमाश्छन्दाꣳसि निविदो म आहुरेतस्मै राष्ट्रमभि सन्नमाम ॥ अभ्यावर्तध्वमुप मेतं साकमयꣳ शास्ताऽधिपतिर्वो अस्तु । अस्य विज्ञानमनु सꣳरभध्वमिमं पश्चादनुजीवाथ सर्वे ॥

[2]ऋताषाडृतधामाऽग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा ताभ्यः स्वाहा सꣳहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवस्सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो बेकुरयो भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसः स्तवाः प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्यर्क्सामान्यप्सरसो वह्नय इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापोऽप्सरसो मुदा भुवनस्य पते यस्य त उपरि गृहा इह च । स नो रास्वाज्यानिꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिम् ॥ परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वस्तस्य विश्वमप्सरसो भुवः सुक्षितिस्सुभूतिर्भद्रकृत्सुवर्वान्पर्जन्यो गन्धर्वस्तस्य विद्युतोऽप्सरसो रुचो दूरेहेतिरमृडयो मृत्युर्गन्धर्वस्तस्य प्रजा अप्सरसो भीरुवश्चारुः कृपणकाशी कामो गन्धर्वस्तस्याधयोऽप्सरसः शोचयन्तीर्नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा

---

१. तै.सं. ५-७-४.　　२. तै.सं. ३-४-७.

ताभ्यः स्वाहा स नों भुवनस्य पते यस्यं त उपरिं गृहा इह चं। उरु ब्रह्मंणेऽस्मै क्षत्राय महि शर्मं यच्छ ॥

[१]नमों अस्तु सर्पेभ्यो ये के चं पृथिवीमनुं। ये अन्तरिंक्षे ये दिवि तेभ्यंः सर्पेभ्यो नमंः ॥ येंऽदो रोचने दिवो ये वा सूर्यंस्य रश्मिषुं। येषांमप्सु सदंः कृतं तेभ्यंः सर्पेभ्यो नमंः ॥ या इषंवो यातुधानांनां ये वा वनस्पतीँरनुं। ये वांऽवटेषु शेरंते तेभ्यंः सर्पेभ्यो नमंः ॥

[२]अयं पुरो हरिंकेशः सूर्यंरश्मिस्तस्यं रथगृत्सश्च रथौंजाश्च सेनानिग्रामण्यौं पुञ्जिकस्थला चं कृतस्थला चांप्सरसौं यातुधानां हेती रक्षांꣳसि प्रहेंतिस्तेभ्यो नमस्ते नों मृडयन्तु ते यं द्विष्मो यश्चं नो द्वेष्टि तं वो जम्भें दधामि ॥ अयं दंक्षिणा विश्वकंर्मा तस्यं रथस्वनश्च रथेंचित्रश्च सेनानिग्रामण्यौं मेनका चं सहजन्या चांप्सरसौं दङ्क्ष्णवंः पशवों हेतिः पौरुंषेयो वधः प्रहेंतिस्तेभ्यो नमस्ते नों मृडयन्तु ते यं द्विष्मो यश्चं नो द्वेष्टि तं वो जम्भें दधामि ॥ अयं पश्चाद्विश्वव्यंचास्तस्य रथंप्रोतश्चासंमरथश्च सेनानिग्रामण्यौं प्रम्लोचंन्ती चानुम्लोचंन्ती चाप्सरसौं सर्पा हेतिर्व्याघ्राः प्रहेंतिस्तेभ्यो नमस्ते नों मृडयन्तु ते यं द्विष्मो यश्चं नो द्वेष्टि तं वो जम्भें दधामि ॥ अयमुंत्तरात्संयद्वंसुस्तस्यं सेनजिच्चं सुषेणंश्च सेनानिग्रामण्यौं विश्वाचीं च घृताचीं चाप्सरसावापों हेतिर्वातः प्रहेंतिस्तेभ्यो नमस्ते नों मृडयन्तु ते यं द्विष्मो यश्चं नो द्वेष्टि तं वो जम्भें दधामि ॥ अयमुपर्यर्वाग्वं-सुस्तस्य ताक्ष्यंश्चारिंष्टनेमिश्च सेनानिग्रामण्यांवुर्वशीं च पूर्वचिंत्तिश्चाप्सरसौं

---

१. तै.सं. ४-२-८. २. तै.सं. ४-४-३.

विद्युद्धेतिर्वस्फूर्जन्प्रहेतिस्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥

[1]आशुः शिशानो वृषभो न युध्मो घनाघनः क्षोभणश्चर्षणीनाम् । संक्रन्दनोऽनिमिष एकवीरः शतꣳसेना अजयत्साकमिन्द्रः ॥ संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना । तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥ स इषुहस्तैः सनिषङ्गिभिर्वशी सꣳस्रष्टा सयुध इन्द्रो गणेन । सꣳसृष्टजित्सोमपाबाहुशर्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता ॥ बृहस्पते परिदीया रथेन रक्षोहाऽमित्राꣳ अप बाधमानः । प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥ गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा । इमꣳ सजाता अनुवीरयध्वमिन्द्रꣳ सखायोऽनु सꣳरभध्वम् ॥ बलविज्ञायः स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रः । अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित् ॥ अभि गोत्राणि सहसा गाहमानोऽदायो वीरः शतमन्युरिन्द्रः । दुश्च्यवनः पृतनाषाडयुध्योऽस्माकꣳसेना अवतु प्रयुत्सु । इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः । देवसेनानामभिभञ्जतीनाञ्जयन्तीनां मरुतो यन्त्वग्रे ॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुताꣳ शर्ध उग्रम् । महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥ अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु । अस्माकं वीरा उत्तरे भवन्त्वस्मानु देवा अवता हवेषु ॥ उद्धर्षय मघवन्नायुधान्युत्सत्वनां

मामकानां महांऽसि। उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानाञ्जयतामेतु घोषः॥ उप प्रेत जयता नरः स्थिरा वः सन्तु बाहवः। इन्द्रो वः शर्म यच्छत्वनाधृष्या यथाऽसथ॥ अवसृष्टा परापत शरव्ये ब्रह्मसंशिता। गच्छामित्रान्प्रविश मैषां कञ्चनोच्छिषः॥ मर्माणि ते वर्मभिश्छादयामि सोमस्त्वा राजाऽमृतेनाभिवस्ताम्। उरोर्वरीयो वरिवस्ते अस्तु जयन्तं त्वामनुमदन्तु देवाः॥ यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव। इन्द्रो नस्तत्र वृत्रहा विश्वाहा शर्म यच्छतु॥

[1]शञ्च मे मयश्च मे प्रियञ्च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रं च मे श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च मे द्रविणं च मे यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च मे सीरं च मे लयश्च म ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुगं च मे शयनं च मे सूषा च मे सुदिनं च मे॥

[2]ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तनुवं पुषेम। मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाऽऽध्यक्षेण पृतना जयेम॥ मम देवा विहवे सन्तु सर्व इन्द्रावन्तो मरुतो विष्णुरग्निः। ममान्तरिक्षमुरु गोपमस्तु मह्यं वातः पवतां कामे अस्मिन्॥ मयि देवा द्रविणमायजन्तां मय्याशीरस्तु मयि देवहूतिः। दैव्या होतारावनिषन्त पूर्वेऽरिष्टाः स्याम तनुवा सुवीराः॥ मह्यं यजन्तु मम

१. तै.सं. ४-७-३. २. तै.सं. ४-७-१४.

अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्याम् ॥ अश्विनोर्भैषज्येन । तेजसे ब्रह्मवर्चसायाभिषिञ्चामि ॥ देवस्य त्वा सवितुः प्रसवे । अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्याम् ॥ सरस्वत्यै भैषज्येन । वीर्यायान्नाद्यायाभिषिञ्चामि ॥ देवस्य त्वा सवितुः प्रसवे । अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्याम् ॥ इन्द्रस्येन्द्रियेण । श्रियै यशसे बलायाभिषिञ्चामि ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या९ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेस्त्वा साम्राज्येनाभिषिञ्चामीन्द्रस्य बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामि ॥



# ऋतुशान्तिः

ॐ नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥

इति वैष्णवीं गायत्रीमष्टसहस्रमष्टशतं वा ॥

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥

इषे त्वोर्जे त्वा वायवस्स्थोपायवस्स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्निया देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मा मा वः स्तेन ईशत माघशꣳसो रुद्रस्य हेतिः परि वो वृणक्तु ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥

यज्ञस्य घोषदसि प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा त आवहन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे देवानां परिषूतमसि वर्षवृद्धमसि देवबर्हिर्मा त्वान्वङ्मा तिर्यक्पर्व ते राध्यासमाच्छेत्ता ते मारिषन्देवबर्हिः शतवल्शं विरोह सहस्रवल्शा वि वयꣳ रुहेम पृथिव्याः सम्पृचः पाहि सुसम्भृता त्वा सम्भराम्यदित्यै रास्नासीन्द्राण्यै सन्नहनं पूषा ते ग्रन्थिं ग्रथ्नातु स ते मास्थादिन्द्रस्य त्वा बाहुभ्यामुद्यच्छे बृहस्पतेर्मूर्ध्ना हराम्युर्वन्तरिक्षमन्विहि देवङ्गममसि ॥

शुन्धध्वं दैव्याय कर्मणे देवयज्यायै मातरिश्वनो घर्मोऽसि द्यौरसि पृथिव्यसि विश्वधाया असि परमेण धाम्ना दृꣳहस्व माह्वार्वसूनां पवित्रमसि

शतधारं वसूनां पवित्रमसि सहस्रधारꣳ हुतः स्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्याꣳ सा विश्वायुस्सा विश्वव्यचास्सा विश्वकर्मा सम्पृच्यध्वमृतावरीरूर्मिणीर्मधुमत्तमा मन्द्रा धनस्य सातये सोमेन त्वाऽऽतनच्मीन्द्राय दधि विष्णो हव्यꣳ रक्षस्व ॥

अग्न आयाहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥

शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभि स्रवन्तु नः ॥

आपो हि ष्ठा...च नः ॥ हिरण्यवर्णाः....निधत्त ॥ पवमानः सुवर्जनः...जातवेदा मोर्जयन्त्या पुनातु ॥

उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳ श्रथाय । अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ अस्तभ्नाद्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्या आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि ॥ यत्किञ्चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि । अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ॥ कितवासो यद्रिरिपुर्न दीवि यद्वाघा सत्यमुत यन्न विद्म । सर्वा ता विष्य शिथिरेव देवाथा ते स्याम वरुण प्रियासः ॥ अव ते हेडो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः । क्षयन्नस्मभ्यमसुर प्रचेतो राजन्नेनाꣳसि शिश्रथः कृतानि ॥ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्रमोषीः ॥

विष्णुसूक्तं - विष्णोर्नुकं....नाम ॥ रुद्रसूक्तं - परिणो रुद्रस्य....कृणुध्वम् ॥ ब्रह्मसूक्तं - ब्रह्मजज्ञानं....समिद्धंवत्याहुतीनाम् ॥ दुर्गासूक्तं- जातवेदसे..अतिदुरितात्यग्निः ॥ श्रीसूक्तं - हिरण्यवर्णां..विन्देयं पुरुषानहम् ॥ पुरुषसूक्तं, रुद्रनमकं, चमकम् ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳ सस्तनूभिः । व्यशेम देवहितं यदायुः ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु । ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ तच्छंयोरावृणीमहे । गातुं यज्ञाय । गातुं यज्ञपतये । दैवी स्वस्तिरस्तु नः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजम् । शं नो अस्तु द्विपदे । शं चतुष्पदे ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ [१]नमो वाचे याचोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मा मामृषयो मन्त्रकृतो मन्त्रपतयः परादुर्माहमृषीन्मन्त्रकृतो मन्त्रपतीन्परादां वैश्वदेवीं वाचमुद्यासꣳ शिवामदस्तां जुष्टां देवेभ्यः शर्म मे द्यौः शर्म पृथिवी शर्म

१. तै.आ. ४-१

विश्वमिदं जगत् । शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्मप्रजापती । भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहमिदमुपस्तरणमुपस्तृण उपस्तरणं मे प्रजायै पशूनां भूयादुप-स्तरणमहं प्रजायै पशूनां भूयासं प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासꣳ शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ [१]शं नो वातः पवतां मातरिश्वा शं नस्तपतु सूर्यः । अहानि शं भवन्तु नः शꣳ रात्रिः प्रतिधीयताम् ॥ शमुषा नो व्युच्छतु शमादित्य उदेतु नः । शिवा नः शन्तमा भव सुमृडीका सरस्वति । मा ते व्योम सन्दृशि ॥ इडायै वास्त्वसि वास्तुमद्वास्तुमन्तो भूयास्म मा वास्तोश्छित्स्मह्यवास्तुः स भूयाद्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ प्रतिष्ठाऽसि प्रतिष्ठावन्तो भूयास्म मा प्रतिष्ठायाश्छित्स्मह्यप्रतिष्ठः स भूयाद्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ आ वात वाहि भेषजं वि वात वाहि यद्रपः । त्वꣳ हि विश्वभेषजो देवानां दूत ईयसे ॥ द्वाविमौ वातौ वात आसिन्धो रापरावतः । दक्षं मे अन्य आवातु पराऽन्यो वातु यद्रपः ॥ यददो वात ते गृहेऽमृतस्य निधिर्हितः । ततो नो देहि जीवसे ततो नो धेहि भेषजम् । ततो नो मह आवह वात आवातु भेषजम् । शम्भूर्मयोभूर्नो हृदे प्र ण आयूꣳषि तारिषत् ॥ इन्द्रस्य गृहोऽसि तं त्वा प्रपद्ये सगुः साश्वः । सह यन्मे अस्ति तेन ॥ भूः प्रपद्ये भुवः प्रपद्ये सुवः प्रपद्ये

१. तै.आ. ४-१-४२.

भूर्भुवस्सुवः प्रपंद्ये वायुं प्रपद्येऽनांर्तां देवतां प्रपद्येऽश्मानंमाखणं प्रपंद्ये प्रजापंतेर्ब्रह्मकोशं ब्रह्म प्रपंद्य ओं प्रपंद्ये ॥ अन्तरिंक्षं म उर्वन्तरं बृहदग्नयः पर्वताश्च ययां वातः स्वस्त्यास्वस्ति मान्तयाँ स्वस्त्या स्वस्ति मानंसानि ॥ प्राणांपानौ मृत्योर्मा पातं प्राणांपानौ मा मां हासिष्टं मयिं मेधां मयिं प्रजां मय्यग्निस्तेजों दधातु मयिं मेधां मयिं प्रजां मयीन्द्रं इन्द्रियं दंधातु मयिं मेधां मयिं प्रजां मयि सूर्यो भ्राजों दधातु ॥ द्युभिरक्तुभिः परिंपातमस्मानरिंष्टेभि-रश्विना सौभंगेभिः । तन्नों मित्रो वरुंणो मामहन्तामदिंतिः सिन्धुंः पृथिवी उत द्यौः ॥ कयां नश्चित्र आभुंवदूती सदावृंधः सखाँ । कया शचिंष्ठया वृता ॥ कस्त्वां सत्यो मदांनां मꣳहिंष्ठो मत्सदन्धंसः । दृढाचिंदारुजे वसुं ॥ अभीषु णः सखींनामविता जंरितृणाम् । शतं भंवास्यूतिभिः ॥ वयः सुपर्णा उपंसेदुरिन्द्रं प्रियमेंधा ऋषंयो नाधंमानाः । अपं ध्वान्तमूंर्णुहि पूर्धि चक्षुंर्मुमुग्ध्यंस्मान्निधयेव बद्धान् ॥ शन्नों देवीरभिष्टंय आपों भवन्तु पीतयें । शं योरभिस्रंवन्तु नः ॥ ईशांना वार्याणां क्षयंन्तीश्चर्षणीनाम् । अपो यांचामि भेषजम् ॥ सुमित्रा न आप ओषंधयः सन्तु दुर्मित्रास्तस्मैं भूयासुर्योस्मान् द्वेष्टि यञ्च वयं द्विष्मः ॥ आपो हि ष्ठा मंयोभुवस्ता नं ऊर्जे दंधातन । महे रणांय चक्षंसे ॥ यो वः शिवतंमो रसस्तस्यं भाजयतेह नः । उशतीरिंव मातरः ॥ तस्मा अरंङ्गमाम वो यस्य क्षयांय जिन्वंथ । आपों जनयंथा च नः ॥ पृथिवी शान्ता सग्निनां शान्ता सा मे शान्ता शुचꣳ शमयतु ॥ अन्तरिंक्षꣳ शान्तं तद्वायुनां शान्तं तन्मे शान्तꣳ शुचꣳ शमयतु ॥ द्यौः शान्ता साऽदित्येनं शान्ता सा मे शान्ता शुचꣳ शमयतु ॥ पृथिवी शान्तिरन्तरिंक्षꣳ शान्तिर्द्यौः

शान्तिर्दिशः शान्तिरवान्तरदिशाः शान्तिरग्निः शान्तिर्वायुः शान्तिरादित्यः शान्तिश्चन्द्रमाः शान्तिर्नक्षत्राणि शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्गौश्शान्तिरजा शान्तिरश्वः शान्तिः पुरुषः शान्तिर्ब्रह्म शान्तिर्ब्राह्मणः शान्तिश्शान्तिरेव शान्तिश्शान्तिर्मे अस्तु शान्तिः ॥ तयाऽहꣳ शान्त्या सर्वशान्त्या मह्यं द्विपदे चतुष्पदे च शान्तिं करोमि शान्तिर्मे अस्तु शान्तिः ॥ एह श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मोत्तिष्ठन्तमनूत्तिष्ठन्तु मा माꣳश्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मा मा हासिषुः ॥ उदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताꣳ अनु । तच्चक्षुर्देवहितं पुरस्ताच्छु-क्रमुच्चरत् ॥ पश्येम शरदः शतं जीवेम शरदः शतं नन्दाम शरदः शतं मोदाम शरदः शतं भवाम शरदः शतꣳ शृणवाम शरदः शतं प्रब्रवाम शरदः शतमजीतास्स्याम शरदः शतं ज्योक्च सूर्यं दृशे ॥ य उदगान्मह-तोऽर्णवाद्विभ्राजमानः सरिरस्य मध्यात्स मा वृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु ॥ ब्रह्मणः श्चोतन्यसि ब्रह्मण आणी स्थो ब्रह्मण आवपनमसि धारितेयं पृथिवी ब्रह्मणा मही धारितमेनेन महदन्तरिक्षं दिवं दाधार पृथिवीꣳ सदेवां यदहं वेद तदहं धारयाणि मा मद्वेदोऽधि विस्रसत् ॥ मेधामनीषे माऽऽविशताꣳ समीची भूतस्य भव्यस्यावरुध्यै सर्वमायुरयाणि सर्वमायुरयाणि ॥ आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः । यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम ॥ ब्रह्म प्रावादिष्म तन्नो मा हासीत् । ॐ शान्तिः शान्तिः शान्तिः ॥

[१]ऋचां प्राचीं महती दिगुच्यते। दक्षिणामाहुर्यजुषामपाराम्। अथर्वणामङ्गिरसां प्रतीचीं। साम्नामुदीची महती दिगुच्यते। ऋग्भिः पूर्वाह्णे दिवि देव ईयते। यजुर्वेदे तिष्ठति मध्ये अह्नः। सामवेदेनास्तमये महीयते। वेदैरशून्यस्त्रिभिरेति सूर्यः। ऋग्भ्यो जाताँ सर्वशो मूर्तिमाहुः। सर्वा गतिर्याजुषी हैव शश्वत्॥ सर्वं तेजः सामरूप्यँ ह शश्वत्। सर्वँ हेदं ब्रह्मणा हैव सृष्टम्। ऋग्भ्यो जातं वैश्यं वर्णमाहुः। यजुर्वेदं क्षत्रियस्याहु-र्योनिम्। सामवेदो ब्राह्मणानां प्रसूतिः। पूर्वे पूर्वेभ्यो वच एतदूचुः। आदर्शमग्निं चिन्वानाः। पूर्वे विश्वसृजोऽमृताः। शतं वर्षसहस्राणि। दीक्षिताः सत्रमासत॥ तप आसीद्गृहपतिः। ब्रह्म ब्रह्माऽभवत्स्वयम्। सत्यँ ह होतैषामासीत्। यद्विश्वसृज आसत। अमृतमेभ्य उदगायत्। सहस्रं परिवत्सरान्। भूतँ ह प्रस्तोतैषामासीत्। भविष्यत्प्रतिचाहरत्। प्राणो अध्वर्युरभवत्। इदँ सर्वँ सिषासताम्॥ अपानो विद्वानावृतः। प्रति प्रातिष्ठदध्वरे। आर्तवा उपगातारः। सदस्या ऋतवोऽभवन्। अर्धमासाश्च मासाँश्च। चमसाध्वर्यवोऽभवन्। अशँसद्ब्रह्मणस्तेजः। अच्छावा-कोऽभवद्यशः। ऋतमेषां प्रशास्ताऽऽसीत्। यद्विश्वसृज आसत॥ ऊर्ग्राजानमुदवहत्। ध्रुवगोपः सहोऽभवत्। ओजोऽभ्यष्टौद्ग्रावण्णः। यद्विश्वसृज आसत। अपचितिः पोत्रीयामयजत्। नेष्ट्रीयामयजत्त्विषिः। आग्नीध्राद्विदुषी सत्यम्। श्रद्धा हैवायजत्स्वयम्। इरा पत्नी विश्वसृजाम्। आकूतिरपिनद्धविः॥ इध्मँ ह क्षुच्चैभ्य उग्रे। तृष्णा चावहतामुभे। वागेषाँ

---

१. तै.ब्रा. ३-१२-९.

सुब्रह्मण्याऽऽसीत्। छन्दोयोगान् विजानती। कल्पतन्त्राणि तन्वानाऽहः। सꣳस्थाश्च सर्वशः। अहोरात्रे पशुपाल्यौ। मुहूर्ताः प्रेष्या अभवन्। मृत्युस्तदभवद्धाता। शमितोग्रो विशां पतिः॥ विश्वसृजः प्रथमाः सत्रमासत। सहस्रसमं प्रसुतेन यन्तः। ततो ह जज्ञे भुवनस्य गोपाः। हिरण्मयः शकुनिर्ब्रह्मनाम। येन सूर्यस्तपति तेजसेद्धः। पिता पुत्रेण पितृमान् योनियोनौ। नावेदविन्मनुते तं बृहन्तम्। सर्वानुभुमात्मानꣳ सम्पराये। एष नित्यो महिमा ब्राह्मणस्य। न कर्मणा वर्धते नो कनीयान्॥ तस्यैवात्मा पदवित्तं विदित्वा। न कर्मणा लिप्यते पापकेन। पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः। पञ्चपञ्चाशतः पञ्चदशाः। पञ्चपञ्चाशतः सप्तदशाः। पञ्चपञ्चाशत एकविꣳशाः। विश्वसृजाꣳ सहस्रसंवत्सरम्। एतेन वै विश्वसृज इदं विश्वमसृजन्त। यद्विश्वमसृजन्त। तस्माद्विश्वसृजः॥ विश्वमेनाननु प्रजायते। ब्रह्मणः सायुज्यꣳ सलोकतां यन्ति। एतासामेव देवतानाꣳ सायुज्यम्। सार्ष्टिताꣳ समानलोकतां यन्ति। य एतदुपयन्ति। ये चैनत्प्राहुः। येभ्यश्चैनत्प्राहुः॥ ओम्॥

ॐ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः। नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि॥ ॐ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः। नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि॥ ॐ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः। नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि॥



# ग्रहमन्त्राः

ॐ आ सत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च। हिरण्ययेन सविता रथेनाऽऽदेवो याति भुवना विपश्यन्॥ अग्निन्दूतं वृणीमहे होतारं विश्ववेदसम्। अस्य यज्ञस्य सुक्रतुम्॥ येषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदाम्। निष्क्रीतोऽयं यज्ञियं भागमेतु रायस्पोषा यजमानस्य सन्तु॥

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपाᳬ रेताᳬसि जिन्वति॥ स्योना पृथिवि भवाऽनृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः॥ क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व। मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृडयन्तु॥

प्र वः शुक्राय भानवे भरध्वम्। हव्यं मतिं चाग्नये सुपूतम्। यो दैव्यानि मानुषा जनूᳬषि। अन्तर्विश्वानि विद्म ना जिगाति॥ इन्द्राणी मासु नारिषु सुपत्नीमहमश्रवम्। न ह्यस्या अपरं च न जरसा मरते पतिः॥ इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः। अस्माकमस्तु केवलः॥

आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य सङ्गथे॥ अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा। अग्निं च विश्वशम्भुवमापश्च विश्वभेषजीः॥ गौरी मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी। अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्॥

उद्बुध्यस्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते सꣳसृजेथामयं च। पुनः कृण्वꣳस्त्वा पितरं युवानमन्वाताꣳसीत्त्वयि तन्तुमेतम्॥ विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि वि ममे रजाꣳसि यो अस्कभायदुत्तरꣳ सधस्थं विचक्रमाणस्त्रेधोरुगायः। विष्णोर्रराटमसि विष्णोः पृष्ठमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा॥

बृहस्पते अति यदर्यो अर्हाद्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवं-सर्तप्रजात तदस्मासु द्रविणं धेहि चित्रम्॥ इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य। तव प्रणीती तव शूर शर्मन्ना विवासन्ति कवयस्सुयज्ञाः॥ ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतस्सुरुचो वेन आवः। स बुध्निया उपमा अस्य विष्ठास्सतश्च योनिमसतश्च विवः॥

शन्नो देवीरभिष्टय आपो भवन्तु पीतये। शं योरभि स्रवन्तु नः॥ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम्॥ इमं यम प्रस्तरमाहि सीदाङ्गिरोभिः पितृभिः संविदानः। आ त्वा मन्त्राः कविशस्ता वहन्त्त्वेना राजन् हविषा मादयस्व॥

कयानश्चित्र आभुवदूती सदा वृधः सखा। कया शचिष्ठया वृता॥ आयङ्गौः पृश्निरक्रमीदसनन्मातरं पुनः। पितरं च प्रयन्त्सुवः॥ यत्ते देवी निरृतिराबबन्ध दामग्रीवास्वविचर्त्यम्। इदं ते तद्विष्याम्यायुषो न मध्यादथा जीवः पितुमद्धि प्रमुक्तः॥

केतुं कृण्वन्नं केतवे पेशोंमर्या अपेशसें। समुषद्भिंरजायथाः ॥ ब्रह्मा देवानां पदवीः कंवीनामृषिर्विप्राणां महिषो मृगाणांम्। श्येनो गृध्राणां स्वधिंतिर्वनांना सोमंः पवित्रमत्येंति रेभंन्न् ॥ सचिंत्र चित्रं चितयंन्तमस्मे चित्रंक्षत्र चित्रतंमं वयो धाम्। चन्द्र रयिं पुंरुवीरं बृहन्तं चन्द्रंचन्द्राभिंर्गृणते युंवस्व ॥

## इन्द्रादिलोकपालमन्त्राः

त्रातारमिन्द्रंमवितारमिन्द्र हवेंहवे सुहव शूरमिन्द्रंम्। हुवे नु शक्रं पुंरुहूतमिन्द्रं स्वस्ति नों मघ वां धात्विन्द्रंः ॥ अग्निर्दा द्रविंणं वीरपेंशा अग्निर्ऋषिं यः सहस्रां सनोतिं। अग्निर्दिवि हव्यमातंतानाग्नेर्धामांनि विभृंता पुरुत्रा ॥ यमो दांधार पृथिवीं यमो विश्वमिदं जगंत्। यमाय सर्वमित्तंस्थे यत्प्राणद्वायुरंक्षितम् ॥ असुंन्वन्तमयंजमानमिच्छस्तेनस्येत्यां तस्कंरस्यान्वेंषि। अन्यमस्मदिंच्छ सातं इत्या नमों देवि निर्ऋते तुभ्यंमस्तु ॥ सधमादों द्युम्निनीरूर्जं एता अनिंभृष्टा अपस्युवो वसांनः। पस्त्यांसु चक्रे वरुंणः सधस्थंमपा शिशुंर्मातृतंमास्वन्तः ॥ आनों नियुद्भिः शतिनींभिरध्वरम्। सहस्रिणींभिरुपंयाहि यज्ञम्। वायो अस्मिन् हविषिं मादयस्व। यूयं पांत स्वस्तिभिः सदां नः ॥ सोमों धेनु सोमो अर्वन्तमाशुम्। सोमों वीरं कंर्मण्यं ददातु। सादन्यं विदथ्यं सभेयंम्। पितुः श्रवंणं यो ददांशदस्मै ॥ सहस्राणि सहस्रधा बांहुवोस्तवं हेतयंः। तासामीशांनो भगवः पराचीना मुखां कृधि ॥

## दुर्गादिदेवतामन्त्राः

ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः॥ गणानान्त्वा गणपतिं हवामहे कविङ्कवीनामुपमश्रवस्तमम्। ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम्॥ क्षेत्रस्य पतिना वयं हितेनेव जयामसि। गामश्वं पोषयित्न्वा स नो मृडातीदृशे॥ वास्तोष्पते प्रतिजानीह्यस्मान्त्स्वावेशो अनमीवो भवानः। यत्वेमहे प्रति तन्नो जुषस्व शन्न एधि द्विपदे शञ्चतुष्पदे॥ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्॥ यतं इन्द्र भयामहे ततो नो अभयं कृधि। मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि। स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी। वृषेन्द्रः पुर एतु नस्स्वस्तिदा अभयङ्करः॥ ये ते सहस्रमयुतं पाशा मृत्यो मर्त्याय हन्तवे। तान् यज्ञस्य मायया सर्वानव यजामहे॥ मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृताय जातमग्निम्। कविं सम्राजमतिथिं जनानामासन्नापात्रं जनयन्त देवाः॥



# महान्यासविधिः

(बोधायनसूत्रम्)

अथातः पञ्चाङ्गरुद्राणां न्यासपूर्वकं जपहोमार्चनाभिषेकविधिं व्याख्यास्यामः। या ते रुद्रेति शिखायाम्। अस्मिन्महत्यर्णव इति शिरसि। सहस्राणि सहस्रश इति ललाटे। हꣳसः शुचिषदिति भ्रुवोर्मध्ये। त्र्यम्बकं यजामह इति नेत्रयोः। नमः स्रुत्याय चेति कर्णयोः। मा नस्तोक इति नासिकायाम्। अवतत्येति मुखे। नीलग्रीवौ द्वौ कण्ठे। नमस्ते अस्त्वायुधायेति बाह्वोः। या ते हेतिरित्युपबाह्वोः। ये तीर्थानीति हस्तयोः। सद्यो जातमित्यादिपञ्चानुवाकान्पञ्चस्वङ्गुलीषु। नमो वः किरिकेभ्य इति हृदये। नमो गणेभ्य इति पृष्ठे। नमस्तक्षभ्य इति कक्षयोः नमो हिरण्यबाहव इति पार्श्वयोः। विज्यं धनुरिति जठरे। हिरण्यगर्भ इति नाभौ। मीढुष्टमेति कट्याम्। ये भूतानामधिपतय इति गुह्ये। ये अन्नेष्वित्यण्डयोः। सशिरा जातवेदा इत्यपाने। मा नो महान्तमित्यूर्वोः। एषं ते रुद्रभाग इति जान्वोः। सꣳसृष्टजिदिति जङ्घयोः। विश्वं भूतमिति गुल्फयोः। ये पथामिति पादयोः। अध्यवोचदधिवक्तेति कवचम्। नमो बिल्मिने चेत्युपकवचम्। नमो अस्तु नीलग्रीवायेति तृतीयं नेत्रम्। प्रमुञ्च धन्वन इत्यस्त्रम्। य एतावन्तश्चेति दिग्बन्धः। ओं नमो भगवते रुद्रायेति नमस्कारं न्यसेत्। ओङ्कारं मूर्ध्नि विन्यस्य नकारं नासिकाग्रतः। मोकारं तु ललाटे वै भकारं मुखमध्यतः। गकारं कण्ठदेशे तु वकारं हृदि विन्यसेत्। तेकारं दक्षिणे हस्ते रुकारं वामहस्तके। द्राकारं नाभिदेशे तु यकारं पादयोर्न्यसेत्। सद्यश्च पादयोर्न्यस्य वामं न्यस्योरुमध्यतः। अघोरं हृदि विन्यस्य मुखे तत्पुरुषं न्यसेत्। ईशानं मूर्ध्नि विन्यस्य हंसमन्त्रं समारभेत्। हंस हंसेति यो ब्रूयाद्धंसो नाम सदाशिवः। एवं न्यासविधिं कृत्वा ततः सम्पुटमारभेत्। त्रातारमिन्द्रं त्वं नो अग्ने सुगं नः पन्थामसुन्वन्तं तत्त्वा याम्यानो नियुद्भिर्वयꣳ सोम

तमीशानमस्मे रुद्राः स्योनापृथिवीत्येतत्सम्पुटमिन्द्रादीन्दिक्षु विन्यसेत्। आदौ प्रणवमुच्चार्य व्याहृतीः प्रणवं ततः। बीजं मन्त्रं समुच्चार्य मन्त्रान्ते बीजमुच्चरेत्। ततः षोडशधा विभक्तेन विभूरसीत्यनुवाकेन षोडशाङ्गरौद्रीकरणं कुर्यात्। शिखायां मस्तके मूर्ध्नि ललाटेऽक्ष्णोश्च कर्णयोः। मुखे कण्ठे च बाह्वोश्च हृदि नाभौ कटौ तथा। ऊर्वोर्जान्वोर्जङ्घयोश्च पादयोः षोडश न्यसेत्। अथ त्वगस्थिगतैरित्याद्युक्त्वा मनो ज्योतिरबोध्यग्निः अग्निर्मूर्धा मूर्धानं मर्माणि ते जातवेदा इति गुह्यनाभिहृदय कण्ठमुखशिरांस्यभिमन्त्र्य ब्रह्मात्मन्नित्यनुवाकेनात्मरक्षा कर्तव्या। शिवसङ्कल्पꣳ हृदयम्। येनेदं येन कर्माणि येन कर्माण्यपसो यत्प्रज्ञानꣳ सुषारथिर्यस्मिन्नृचो यदत्र षष्ठं यज्जाग्रतो येनेदं येन द्यौर्ये मनो हृदयमचिन्त्यमेका च ये पञ्च वेदाहमेतं यस्यैतं धीराः परात्परतरं चैव परात्परतरं ब्रह्म या वेदादिषु यो वै देवं प्रयतः प्रणवो योऽसौ गोभिर्जुष्टं मा नो महान्तं मा नस्तोके गन्धद्वारां विश्वतश्चक्षुरुत त्र्यम्बकꣳ ऋतꣳ सत्यं ब्रह्म जज्ञानं यः प्राणतो य आत्मदा कद्रुद्राय कैलास चतुरो वेदान्य इदꣳ शिवसङ्कल्पꣳ षट्त्रिꣳशत्। पुरुषसूक्तꣳ शिरः। उत्तरनारायणꣳ शिखा। अप्रतिरथं कवचम्। प्रतिपूरुषमिति नेत्रम्। शतरुद्रीयमित्यस्त्रम्। अथ पञ्चाङ्गं सकृज्जपित्वा हिरण्यगर्भो यः प्राणतो ब्रह्म जज्ञानं मही द्यौरुपश्वासयाग्ने नय या ते अग्न इमं यमप्रस्तरमित्यष्टाङ्गं प्रणमेत्। उरसा शिरसा दृष्ट्या मनसा वचसा तथा। पद्भ्यां कराभ्यां कर्णाभ्यां प्रणामोऽष्टाङ्ग उच्यते। अथात्मानमित्यादिना ध्यात्वा द्विजः सम्यक्ततो देवयजनमारभेत्॥

---

# महान्यासः

ॐ या ते रुद्र शिवा तनूरघोरापापकाशिनी । तया नस्तनुवा शन्तमया गिरिशन्ताभि चाकशीहि ॥ शिखायै नमः ॥ अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ शिरसे नमः ॥ सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम् । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ललाटाय नमः ॥ हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ भ्रुवोर्मध्याय नमः ॥ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥ नेत्राभ्यां नमः ॥ नमः स्रुत्याय च पथ्याय च ॥ कर्णाभ्यां नमः ॥ मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीर् हविष्मन्तो नमसा विधेम ते ॥ नासिकायै नमः ॥ अवतत्य धनुस्त्वꣳ सहस्राक्ष शतेषुधे । निशीर्य शल्यानां मुखा शिवो नः सुमना भव ॥ मुखाय नमः ॥ नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ कण्ठाय नमः ॥ नीलग्रीवाः शितिकण्ठा दिवꣳ रुद्रा उपश्रिताः । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ उपकण्ठाय नमः ॥ नमस्ते अस्त्वायुधायानातताय धृष्णवे । उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥ बाहुभ्यां नमः ॥ या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः । तयास्मान् विश्वतस्त्वमयक्ष्मया परिब्भुज ॥ उपबाहुभ्यां नमः ॥ ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि । हस्ताभ्यां नमः ॥

सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः। भवेभवे नातिभवे भवस्व माम्। भवोद्भवाय नमः॥ अङ्गुष्ठाभ्यां नमः॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः॥ तर्जनीभ्यां नमः॥ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः। सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः॥ मध्यमाभ्यां नमः॥ तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्॥ अनामिकाभ्यां नमः॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्॥ कनिष्ठिकाभ्यां नमः॥

नमो वः किरिकेभ्यो देवानाꣳ हृदयेभ्यः॥ हृदयाय नमः॥ नमो गणेभ्यो गणपतिभ्यश्च वो नमः॥ पृष्ठाय नमः॥ नमस्तक्षभ्यो रथकारेभ्यश्च वो नमः॥ कक्षाभ्यां नमः॥ नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमः॥ पार्श्वाभ्यां नमः॥ विज्यं धनुः कपर्दिनो विशल्यो बाणवाꣳ उत। अनेशन्नस्येषव आभुरस्य निषङ्गथिः॥ जठराय नमः॥ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥ नाभ्यै नमः॥ मीढुष्टम शिवतम शिवो नः सुमना भव। परमे वृक्ष आयुधं निधाय कृत्तिं वसान आ चर पिनाकं बिभ्रदागहि॥ कट्यै नमः॥ ये भूतानामधिपतयो विशिखासः कपर्दिनः। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि॥ गुह्याय नमः॥ ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान्। तेषाꣳ सहस्रयोजनेऽव धन्वानि

तन्मसि ॥ अण्डाभ्यां नमः ॥ सशिरा जातवेदाः । अक्षरं परमं पदम् । वेदानाꣳ शिरं उत्तमम् । जातवेदसे शिरसि माता । ब्रह्म भूर्भुवः सुवरोम् ॥ अपानाय नमः ॥ मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् । मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः ॥ ऊरुभ्यां नमः ॥ एष ते रुद्र भागस्तं जुषस्व तेनावसेन परो मूजवतोऽती-ह्यवततधन्वा पिनाकहस्तः कृत्तिवासाः ॥ जानुभ्यां नमः ॥ सꣳसृष्टजित्सोमपा बाहुशर्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता । बृहस्पते परिदीया रथेन रक्षोहाऽमित्राꣳ अपबाधमानः ॥ जङ्घाभ्यां नमः ॥ विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥ गुल्फाभ्यां नमः ॥ ये पथां पथिरक्षय ऐलबृदा यव्युधः । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ पादाभ्यां नमः ॥ अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् । अहीꣳश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यः ॥ कवचाय नमः ॥ नमो बिल्मिने च कवचिने च ॥ उपकवचाय नमः ॥ नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे । अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः ॥ तृतीयनेत्राय नमः ॥ प्र मुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम् । याश्च ते हस्त इषवः परा ता भगवो वप ॥ अस्त्राय नमः ॥ य एतावन्तश्च भूयाꣳसश्च दिशो रुद्रा वितस्थिरे । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ दिग्बन्धाय नमः ॥

ॐ मूर्ध्ने नमः । नं नासिकाग्राय नमः । मों ललाटाय नमः । भं मुखमध्याय नमः । गं कण्ठाय नमः । वं हृदयाय नमः । तें दक्षिणहस्ताय नमः । रुं वामहस्ताय नमः । द्रां नाभ्यै नमः । यं पादाभ्यां नमः ॥

सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः। भवेभवे नातिभवे भवस्व माम्। भवोद्भवाय नमः॥ पादाभ्यां नमः॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः॥ ऊरुमध्याय नमः॥ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः। सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः॥ हृदयाय नमः॥ तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्॥ मुखाय नमः॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्॥ मूर्ध्ने नमः॥

अस्य श्रीहंसगायत्रीमन्त्रस्य। आत्मा ऋषिः। अव्यक्तगायत्रीछन्दः। परमात्मा देवता। हंसगायत्रीप्रसादसिद्ध्यर्थे जपे विनियोगः॥ हं सां अङ्गुष्ठाभ्यां नमः। हं सीं तर्जनीभ्यां नमः। हं सूं मध्यमाभ्यां नमः। हं सैं अनामिकाभ्यां नमः। हं सौं कनिष्ठिकाभ्यां नमः॥ हं सः करतलकरपृष्ठाभ्यां नमः। हं सां हृदयाय नमः। हं सीं शिरसे स्वाहा। हं सूं शिखायै वषट्। हं सैं कवचाय हुम्। हं सौं नेत्रत्रयाय वौषट्। हं सः अस्त्राय फट्। भूर्भुवः सुवरोमिति दिग्बन्धः॥ गमागमस्थं गमनादिशून्यं चिद्रूपदीपं तिमिरापहारम्। पश्यामि तं सर्वजनान्तरस्थं नमामि हंसं परमात्मरूपम्। हंसः सोऽहं सोऽहं हंसः॥ हंसहंसाय विद्महे परमहंसाय धीमहि। तन्नो हंसः प्रचोदयात्॥

**सम्पुटीकरणम्** – ॐ भूर्भुवस्सुवः। ॐ ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम्। हुवे नु शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो

मघवा धात्विन्द्रः ॥ पूर्वदिग्भागे ललाटस्थाने इन्द्राय नमः ॥ ॐ भूर्भुवस्सुवः । ॐ नं त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेडोऽवयासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् ॥ नं आग्नेयदिग्भागे नेत्रस्थाने अग्नये नमः ॥ ॐ भूर्भुवस्सुवः । ॐ मों सुगं नः पन्थामभयं कृणोतु । यस्मिन्नक्षत्रे यम एति राजा । यस्मिन्नेनमभ्यषिंञ्चन्त देवाः । तदस्य चित्रं हविषा यजाम ॥ मों दक्षिणदिग्भागे कर्णस्थाने यमाय नमः ॥ ॐ भूर्भुवस्सुवः । ॐ भं असुन्वन्तमयजमानमिच्छस्तेनस्येत्यां तस्करस्यान्वेषि । अन्यमस्मदिच्छ सात इत्या नमो देवि निरृते तुभ्यमस्तु ॥ भं निरृतिदिग्भागे मुखस्थाने निरृतये नमः ॥ ॐ भूर्भुवस्सुवः । ॐ गं तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरु शंस मान आयुः प्रमोषीः ॥ गं पश्चिमदिग्भागे बाहुस्थाने वरुणाय नमः ॥ ॐ भूर्भुवस्सुवः । ॐ वं आ नो नियुद्भिः शतिनीभिरध्वरम् । सहस्रिणीभिरुप याहि यज्ञम् । वायो अस्मिन् हविषि मादयस्व । यूयं पात स्वस्तिभिः सदा नः ॥ वं वायव्यदिग्भागे नासिकास्थाने वायवे नमः ॥ ॐ भूर्भुवस्सुवः । ॐ तें वयं सोम व्रते तव । मनस्तनूषु बिभ्रतः । प्रजावन्तो अशीमहि ॥ तें उत्तरदिग्भागे हृदयस्थाने सोमाय नमः ॥ ॐ भूर्भुवः सुवः । ॐ रुं तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम् । पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ रुं ईशानदिग्भागे नाभिस्थाने ईशानाय नमः ॥ ॐ भूर्भुवस्सुवः । ॐ द्रां अस्मे रुद्रामेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः । यः शंसते स्तुवते धायि पज्र इन्द्रज्येष्ठा

अस्मा२ अंवन्तु देवाः ॥ द्रां ऊर्ध्वदिग्भागे मूर्ध्नि स्थाने ब्रह्मणे नमः ॥ ॐ भूर्भुवस्सुवंः । ॐ यं स्योना पृंथिवि भवांनृक्षरा निवेशंनी । यच्छां नः शर्म सप्रथाः ॥ यं अधोदिग्भागे पादस्थाने पृथिव्यै नमः ॥

**षोडशाङ्गरौद्रीकरणम्** ॐ अं विभूरंसि प्रवाहंणो रौद्रेणानींकेन पाहि मांग्ने पिपृहि मा मा मां हि२सीः ॥ अं शिखायै नमः ॥ ॐ आं वह्निरसि हव्यवाहंनो रौद्रेणानींकेन पाहि मांग्ने पिपृहि मा मा मां हि२सीः ॥ आं शिरसे नमः ॥ ॐ इं श्वात्रोंऽसि प्रचेंता रौद्रेणानींकेन पाहि मांऽग्ने पिपृहि मा मा मां हि२सीः ॥ इं मूर्ध्ने नमः ॥ ॐ ईं तुथोंऽसि विश्ववेंदा रौद्रेणानींकेन पाहि मांऽग्ने पिपृहि मा मा मां हि२सीः ॥ ईं ललाटाय नमः ॥ ॐ उं उशिगंसि कवी रौद्रेणानींकेन पाहि मांऽग्ने पिपृहि मा मा मां हि२सीः ॥ उं नेत्राभ्यां नमः ॥ ॐ ऊं अङ्घांरिरसि बम्भांरी रौद्रेणानींकेन पाहि मांऽग्ने पिपृहि मा मा मां हि२सीः ॥ ऊं कर्णाभ्यां नमः ॥ ॐ ऋं अवस्युरंसि दुवंस्वान्रौद्रेणानींकेन पाहि मांऽग्ने पिपृहि मा मा मां हि२सीः ॥ ऋं मुखाय नमः ॥ ॐ ॠं शुन्ध्यूरंसि मार्जालीयो रौद्रेणानींकेन पाहि मांऽग्ने पिपृहि मा मा मां हि२सीः ॥ ॠं कण्ठाय नमः ॥ ॐ ऌं सम्राडंसि कृशानू रौद्रेणानींकेन पाहि मांऽग्ने पिपृहि मा मा मां हि२सीः ॥ ऌं बाहुभ्यां नमः ॥ ॐ ॡं परिषद्योंऽसि पवंमानो रौद्रेणानींकेन पाहि मांऽग्ने पिपृहि मा मा मां हि२सीः ॥ ॡं हृदयाय नमः ॥ ॐ एं प्रतक्वांसि नभंस्वान्रौद्रेणानींकेन पाहि मांऽग्ने पिपृहि मा मा मां हि२सीः ॥ एं नाभ्यै नमः ॥ ॐ ऐं असंम्मृष्टोऽसि हव्यसूदो रौद्रेणानींकेन

पाहि माँऽग्ने पिपृहि मा मा मां हिꣳसीः ॥ ऐं कट्यै नमः ॥ ॐ ऋतधामाऽसि सुवर्ज्योती रौद्रेणानीकेन पाहि माँऽग्ने पिपृहि मा मा मां हिꣳसीः ॥ ॐ ऊरुभ्यां नमः ॥ ॐ औं ब्रह्म ज्योतिरसि सुवर्धामा रौद्रेणानीकेन पाहि माँऽग्ने पिपृहि मा मा मां हिꣳसीः ॥ औं जानुभ्यां नमः ॥ ॐ अं अजोऽस्येकं-पाद्रौद्रेणानीकेन पाहि माँऽग्ने पिपृहि मा मा मां हिꣳसीः ॥ अं जङ्घाभ्यां नमः ॥ ॐ अः अहिरसि बुध्नियो रौद्रेणानीकेन पाहि माँऽग्ने पिपृहि मा मा मां हिꣳसीः ॥ अः पादाभ्यां नमः ॥

त्वगस्थिगतैः सर्वपापैः प्रमुच्यते सर्वभूतेष्वपराजितो भवति ततो भूतप्रेतपिशाचब्रह्मराक्षसयक्षयमदूतशाकिनीडाकिनीसर्पश्वापदतस्करज्वराद्युप-द्रवजोपघाताः सर्वे ज्वलन्तं पश्यन्तु माꣳ रक्षन्तु मम यजमानꣳ रक्षन्तु ॥

मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु । बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्ताम् ॥ गुह्याय नमः ॥ अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् । यह्वा इव प्रवयामुज्जिहानाः प्रभानवः सिस्रते नाकमच्छ ॥ नाभ्यै नमः ॥ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वति ॥ हृदयाय नमः ॥ मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृताय जातमग्निम् । कविꣳ सम्राजमतिथिं जनानामासन्नापात्रं जनयन्त देवाः ॥ कण्ठाय नमः ॥ मर्माणि ते वर्मभिश्छादयामि सोमस्त्वा राजाऽमृतेनाभिवस्ताम् । उरोर्वरीयो वरिवस्ते अस्तु जयन्तं त्वामनुमदन्तु देवाः ॥ मुखाय नमः ॥ जातवेदा यदि वा

पावकोऽसि। वैश्वानरो यदि वा वैद्युतोऽसि। शं प्रजाभ्यो यजमानाय लोकम्। ऊर्जं पुष्टिं ददंदभ्यावंवृत्स्व ॥ शिरसे नमः ॥

ब्रह्मात्मन्वदसृजत। तदकामयत। समात्मना पद्येयेति। आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै दशमꣳ हूतः प्रत्यशृणोत्। स दशहूतोऽभवत्। दशहूतो ह वै नामैषः। तं वा एतं दशहूतꣳ सन्तम्। दशहोतेत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः ॥ आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै सप्तमꣳ हूतः प्रत्यशृणोत्। स सप्तहूतोऽभवत्। सप्तहूतो ह वै नामैषः। तं वा एतꣳ सप्तहूतꣳ सन्तम्। सप्तहोतेत्या चक्षते परोक्षेण। परोक्षप्रिया इवहि देवाः। आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै षष्ठꣳ हूतः प्रत्यशृणोत्। स षड्ढूतोऽभवत् ॥ षड्ढूतो ह वै नामैषः। तं वा एतꣳ षड्ढूतꣳ सन्तम्। षड्ढोतेत्या चक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः। आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै पञ्चमꣳ हूतः प्रत्यशृणोत्। स पञ्चहूतोऽभवत्। पञ्चहूतो ह वै नामैषः। तं वा एतं पञ्चहूतꣳ सन्तम्। पञ्चहोतेत्याचक्षते परोक्षेण ॥ परोक्षप्रिया इव हि देवाः। आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै चतुर्थꣳ हूतः प्रत्यशृणोत्। स चतुर्हूतोऽभवत्। चतुर्हूतो हवै नामैषः। तं वा एतं चतुर्हूतꣳ सन्तम्। चतुर्होतेत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः। तमब्रवीत्। त्वं वै मे नेदिष्ठꣳ हूतः प्रत्यश्रौषीः ॥ त्वयैनानाख्यातार इति। तस्मान्नु हैनाꣳ श्चतुर्होतार इत्याचक्षते। तस्माच्छुश्रूषुः पुत्राणाꣳ हृद्यतमः। नेदिष्ठो हृद्यतमः। नेदिष्ठो ब्रह्मणो भवति। य एवं वेद ॥

**शिवसङ्कल्पाः** ॐ येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम् । येन यज्ञस्त्रायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु ॥ येन कर्माणि प्रचरन्ति धीरा यतो वाचा मनसा चारुयन्ति । यत्सम्मितं मनः सञ्चरन्ति तन्मे मनः शिवसङ्कल्पमस्तु ॥ येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः । यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु । यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥ सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव । हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसङ्कल्पमस्तु ॥ यस्मिन्नृचः साम यजूँषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः । यस्मिँश्चित्तँ सर्वमोतं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ यदत्र षष्ठं त्रिशतँ सुवीर्यं यज्ञस्य गुह्यं नवनावमाय्यम् । दश पञ्च त्रिँशतं यत्परं तन्मे मनः शिवसङ्कल्पमस्तु ॥ यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवेति । दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु ॥ येनेदं विश्वं जगतो बभूव ये देवा विमहसो जातवेदाः । तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमास्तन्मे मनः शिवसङ्कल्पमस्तु ॥ येन द्यौः पृथिवी चान्तरिक्षं च ये पर्वताः प्रदिशो दिशश्च । येनेदं जगद्व्याप्तं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ ये मनो हृदयं ये च देवा ये दिव्या आपो ये सूर्यरश्मिः । ये श्रोत्रे चक्षुषी सञ्चरन्तं तन्मे मनः शिवसङ्कल्पमस्तु ॥ अचिन्त्यं चाप्रमेयं च व्यक्ताव्यक्तपरं च यत् । सूक्ष्मात्सूक्ष्मतरं ज्ञेयं तन्मे मनः शिवसङ्कल्पमस्तु ॥ एका च दश च शतं च सहस्रं चायुतं च नियुतं च प्रयुतं चार्बुदं च न्यर्बुदं च समुद्रश्च मध्यं चान्तश्च

परार्धश्च तन्मे मनः शिवसंङ्कल्पमस्तु ॥ ये पंञ्च पञ्चादशशतꣳ सहस्रमयुतं न्यर्बुदं च। ये अग्निचित्तेष्टकास्ताꣳ शरीरं तन्मे मनः शिवसंङ्कल्पमस्तु ॥ वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसः परस्तात्। यस्य योनिं परिपश्यन्ति धीरास्तन्मे मनः शिवसंङ्कल्पमस्तु ॥ यस्यैतं धीराः पुनन्ति कवयो ब्रह्माणमेतं त्वावृणुतमिन्दुम्। स्थावरं जङ्गमं द्यौराकाशं तन्मे मनः शिवसंङ्कल्पमस्तु ॥ परात्परतरं चैव तत्पराच्चैव यत्परम्। यत्परात्परतो ज्ञेयं तन्मे मनः शिवसंङ्कल्पमस्तु ॥ परात्परतरं ब्रह्म तत्परात्परतो हरिः। यत्परात्परतोऽधीशं तन्मे मनः शिवसंङ्कल्पमस्तु ॥ या वेदादिषु गायत्री सर्वव्यापी महेश्वरी। ऋग्यजुस्सामाथर्वैश्च तन्मे मनः शिवसंङ्कल्पमस्तु ॥ यो वै देवं महादेवं प्रयतः प्रणवः शुचिः। यः सर्वः सर्ववेदैश्च तन्मे मनः शिवसंङ्कल्पमस्तु ॥ प्रयतः प्रणवोङ्कारं प्रणवं पुरुषोत्तमम्। ओङ्कारं प्रणवात्मानं तन्मे मनः शिवसंङ्कल्पमस्तु ॥ योऽसौ सर्वेषु वेदेषु पठ्यते ह्ययमीश्वरः। अकायो निर्गुणो ह्यात्मा तन्मे मनः शिवसंङ्कल्पमस्तु ॥ गोभिर्जुष्टं धनेन ह्यायुषा च बलेन च। प्रजया पशुभिः पुष्कराक्षं तन्मे मनः शिवसंङ्कल्पमस्तु ॥ मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम्। मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषस्तन्मे मनः शिवसंङ्कल्पमस्तु ॥ मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। वीरान्मानो रुद्र भामितो वधीर् हविष्मन्तो नमसा विधेम ते तन्मे मनः शिवसंङ्कल्पमस्तु ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीꣳ सर्वभूतानां तामिहोपह्वये श्रियं तन्मे मनः शिवसंङ्कल्पमस्तु ॥

विश्वतंश्चक्षुरुत विश्वतोंमुखो विश्वतोंहस्त उत विश्वतंस्पात्। सं बाहुभ्यां नमंति संपतंत्रैर्द्यावांपृथिवी जनयंन्देव एकस्तन्मे मनंः शिवसंङ्कल्पमंस्तु ॥ त्र्यंम्बकं यजामहे सुगन्धिं पुंष्टिवर्धंनम्। उर्वारुकमिंव बन्धंनान्मृत्योर्मुंक्षीय माऽमृतात्तन्मे मनंः शिवसंङ्कल्पमंस्तु ॥ ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गंलम्। ऊर्ध्वरेंतं विंरूपाक्षं विश्वरूंपाय वै नमो नमस्तन्मे मनंः शिवसंङ्कल्पमंस्तु ॥ ब्रह्मं जज्ञानं प्रंथमं पुरस्ताद्विसीमतः सुरुचों वेन आंवः। स बुध्नियां उपमा अंस्य विष्ठाः सतश्च योनिमसंतश्च विवस्तन्मे मनंः शिवसंङ्कल्पमंस्तु ॥ यः प्रांणतो निंमिषतो मंहित्वैक इद्राजा जगंतो बभूवं। य ईशें अस्य द्विपदश्चतुंष्पदः कस्मैं देवायं हविषां विधेम तन्मे मनंः शिवसंङ्कल्पमंस्तु ॥ य आंत्मदा बंलदा यस्य विश्वं उपासंते प्रशिषं यस्यं देवाः। यस्यं छायाऽमृतं यस्यं मृत्युः कस्मैं देवायं हविषां विधेम तन्मे मनंः शिवसंङ्कल्पमंस्तु ॥ कद्रुद्राय प्रचेंतसे मीढुष्टंमाय तव्यंसे। वोचेम शन्तंमꣳ हृदे। सर्वो ह्येष रुद्रस्तस्मैं रुद्राय नमों अस्तु तन्मे मनंः शिवसंङ्कल्पमंस्तु ॥ कैलांसशिखरे रम्ये शङ्करंस्य शिवालंये। देवतांस्तत्र मोदन्ति तन्मे मनंः शिवसंङ्कल्पमंस्तु ॥ चतुरों वेदानंधीयीत सर्वशांस्त्रमयं विंदुः। इतिहासपुंराणानि तन्मे मनंः शिवसंङ्कल्पमंस्तु ॥ य इदꣳ शिवंसङ्कल्पꣳ सदा ध्यांयन्ति ब्राह्मंणाः। ते परं मोक्षं गंमिष्यन्ति तन्मे मनंः शिवसंङ्कल्पमंस्तु ॥ हृदयाय नमः ॥

सहस्रंशीरषा पुरुंषः .... साध्यास्सन्तिं देवाः ॥ शिरसे स्वाहा ॥ अद्भ्यस्सम्भूंतः ..... सर्वं मनिषाण ॥ शिखायै वषट् ॥

आशुः शिशानो वृषभो न युध्मो घनाघनः क्षोभणश्चर्षणीनाम्। संक्रन्दनोऽनिमिष एकवीरः शत९सेना अजयत्साकमिन्द्रः॥ संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना। तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा॥ स इषुहस्तैः सनिषङ्गिभिर्वशी स९स्रष्टा सयुध इन्द्रो गणेन। स९सृष्टजित्सोमपाबाहुशर्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता॥ बृहस्पते परिदीया रथेन रक्षोहाऽमित्रा९ अप बाधमानः। प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम्॥ गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा। इम९ सजाता अनुवीरयध्वमिन्द्र९ सखायोऽनु स९रभध्वम्॥ बलविज्ञायः स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रः। अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित्॥ अभि गोत्राणि सहसा गाहमानोऽदायो वीरः शतमन्युरिन्द्रः। दुश्च्यवनः पृतनाषाडयुध्योऽस्माक९सेना अवतु प्रयुत्सु। इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः। देवसेनानामभिभञ्जतीनाञ्जयन्तीनां मरुतो यन्त्वग्रे॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुता९ शर्ध उग्रम्। महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात्॥ अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु। अस्माकं वीरा उत्तरे भवन्त्वस्मानु देवा अवता हवेषु॥ उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां महा९सि। उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानाञ्जयतामेतु घोषः॥ उप प्रेत जयता नरः स्थिरा वः सन्तु बाहवः। इन्द्रो वः शर्म यच्छत्वनाधृष्या यथाऽसथ॥ अवसृष्टा परापत शरव्ये ब्रह्मस९शिता। गच्छामित्रान्प्रविश

मैषां कञ्चनोच्छिंषः ॥ मर्माणि ते वर्मभिश्छादयामि सोमस्त्वा राजाऽमृतेनाभिवंस्ताम् । उरोर्वरीयो वरिवस्ते अस्तु जयन्तं त्वामनुमदन्तु देवाः ॥ यत्र बाणाः सम्पतन्ति कुमारा विशिखा इंव । इन्द्रो नस्तत्र वृत्रहा विश्वाहा शर्म यच्छतु ॥ कवचाय हुम् ॥

प्रतिपूरुषमेकंकपालान्निर्वपत्येकमतिरिक्तं यावन्तो गृह्यास्स्मस्तेभ्यः कमंकरं पशूनाꣳ शर्मासि शर्म यजमानस्य शर्म मे यच्छैकं एव रुद्रो न द्वितीयाय तस्थ आखुस्ते रुद्र पशुस्तं जुषस्वैष ते रुद्र भागः सह स्वस्राऽम्बिकया तं जुंषस्व भेषजं गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजꣳ सुभैषजं यथाऽसंति । सुगं मेषाय मेष्यां अवाम्ब रुद्रमंदिमह्यवं देवं त्र्यंम्बकम् । यथा नः श्रेयंसः करद्यथा नो वस्यंसः करद्यथा नः पशुमतः करद्यथा नो व्यवसाययात् ॥ त्र्यंम्बकं यजामहे सुगन्धिं पुंष्टिवर्धनम् । उर्वारुकमिंव बन्धनान्मृत्योर्मुंक्षीय माऽमृतात् ॥ एष ते रुद्र भागस्तं जुंषस्व तेनावसेनं परो मूजंवतोऽतीह्यवंततधन्वा पिनाकहस्तः कृत्तिवासाः ॥ नेत्रत्रयाय वौषट् ॥

त्वमंग्ने रुद्रो असुरो महो दिवः । त्वꣳ शर्धो मारुतं पृक्ष ईशिषे । त्वं वातैररुणैर्यासि शंगयः । त्वं पूषा विधतः पासि नु त्मना ॥ देवा देवेषु श्रयध्वम् । प्रथमा द्वितीयेषु श्रयध्वम् । द्वितीयास्तृतीयेषु श्रयध्वम् । तृतीयाश्चतुर्थेषु श्रयध्वम् । चतुर्थाः पंञ्चमेषु श्रयध्वम् । पञ्चमाः षष्ठेषु श्रयध्वम् ॥ षष्ठाः सप्तमेषु श्रयध्वम् । सप्तमा अष्टमेषु श्रयध्वम् । अष्टमा

नवमेषु श्रयध्वम्। नवमा दशमेषु श्रयध्वम्। दशमा एकादशेषु श्रयध्वम्। एकादशा द्वादशेषु श्रयध्वम्। द्वादशास्त्रयोदशेषु श्रयध्वम्। त्रयोदशाश्चतुर्दशेषु श्रयध्वम्। चतुर्दशाः पञ्चदशेषु श्रयध्वम्। पञ्चदशाः षोडशेषु श्रयध्वम्॥ षोडशाः सप्तदशेषु श्रयध्वम्। सप्तदशा अष्टादशेषु श्रयध्वम्। अष्टादशा एकान्नविꣳशेषु श्रयध्वम्। एकान्नविꣳशा विꣳशेषु श्रयध्वम्। विꣳशा एकविꣳशेषु श्रयध्वम्। एकविꣳशा द्वाविꣳशेषु श्रयध्वम्। द्वाविꣳशास्त्रयोविꣳशेषु श्रयध्वम्। त्रयोविꣳशाश्चतुर्विꣳशेषु श्रयध्वम्। चतुर्विꣳशाः पञ्चविꣳशेषु श्रयध्वम्। पञ्चविꣳशाः षड्विꣳशेषु श्रयध्वम्॥ षड्विꣳशाः सप्तविꣳशेषु श्रयध्वम्। सप्तविꣳशा अष्टाविꣳशेषु श्रयध्वम्। अष्टाविꣳशा एकान्नत्रिꣳशेषु श्रयध्वम्। एकान्नत्रिꣳशास्त्रिꣳ-शेषु श्रयध्वम्। त्रिꣳशा एकत्रिꣳशेषु श्रयध्वम्। एकत्रिꣳशा द्वात्रिꣳशेषु श्रयध्वम्। द्वात्रिꣳशास्त्रयस्त्रिꣳशेषु श्रयध्वम्। देवांस्त्रिरेकादशास्त्रि-स्त्रयस्त्रिꣳशाः। उत्तरे भवत। उत्तरवर्त्मान उत्तरसत्वानः। यत्काम इदं जुहोमि। तन्मे समृद्ध्यताम्। वयꣳस्याम पतयो रयीणाम्। भूर्भुवः स्वः स्वाहा। अस्त्राय फट्॥

**पञ्चाङ्गजपः** - ॐ सद्योजातं प्रपद्यामि सद्यो जाताय वै नमो नमः। भवेभवे नातिभवे भवस्व माम्। भवोद्भवाय नमः॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः॥

अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥

**साष्टाङ्गनमस्कारः** – ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ उरसा नमः ॥ यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ शिरसा नमः ॥ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः । स बुध्नियां उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ दृष्ट्या नमः ॥ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतान्नो भरीमभिः ॥ मनसा नमः ॥ उपश्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत् । स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो अपसेध शत्रून् ॥ वचसा नमः ॥ अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नमउक्तिं विधेम । पद्भ्यां नमः ॥ या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहा या ते अग्नेऽयाशया रजाशया हराशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीꣳ स्वाहा ॥ कराभ्यां नमः ॥ इमं यमप्रस्तरमाहि सीदाङ्गिरोभिः पितृभिः संविदानः । आत्वा मन्त्राः कविशस्तावहन्त्वेना राजन् हविषा मादयस्व ॥ कर्णाभ्यां नमः ॥

अथात्मानं शिवात्मानं श्रीरुद्ररूपं ध्यायेत् - शुद्धस्फटिकसङ्काशं त्रिनेत्रं पञ्चवक्त्रकम्। गङ्गाधरं दशभुजं सर्वाभरणभूषितम्॥ नीलग्रीवं शशाङ्काङ्कं नागयज्ञोपवीतिनम्। व्याघ्रचर्मोत्तरीयं च वरेण्यमभयप्रदम्॥ कमण्डल्वक्षसूत्राभ्यामन्वितं शूलपाणिनम्। ज्वलन्तं पिङ्गलजटं शिखामध्योदधारिणम्॥ वृषस्कन्धसमारूढमुमादेहार्धधारिणम्। अमृतेनाप्लुतं हृष्टं दिव्यभोगसमन्वितम्॥ दिग्देवतासमायुक्तं सुरासुरनमस्कृतम्। नित्यं तं शाश्वतं शुद्धं ध्रुवमक्षरमव्ययम्॥ सर्वव्यापिनमीशानं रुद्रं वै विश्वरूपिणम्। एवं ध्यात्वा द्विजः सम्यक्ततो यजनमारभेत्॥

# लघुन्यासः

**बोधायनगृह्यशेषसूत्रम्**

अथातो रुद्रस्नानार्चनविधिं व्याख्यास्यामः। आदितः एव तीर्थे स्नात्वोदेत्याहतं वासः परिधाय शुचिः प्रयतो ब्रह्मचारी शुक्लवासा ईशानस्य प्रतिकृतिं कृत्वा तस्य दक्षिणाप्रत्यग्देशे तन्मुखः स्थित्वाऽऽत्मनि देवताः स्थापयेत् ॥

प्रजनने ब्रह्मा तिष्ठतु। पादयोर्विष्णुस्तिष्ठतु। हस्तयोर्हरस्तिष्ठतु। बाह्वोरिन्द्रस्तिष्ठतु। जठरे अग्निस्तिष्ठतु। हृदये शिवस्तिष्ठतु। कण्ठे वसवस्तिष्ठन्तु। वक्त्रे सरस्वती तिष्ठतु। नासिकयोर्वायुस्तिष्ठतु। नयनयोश्चन्द्रादित्यौ तिष्ठेताम्। कर्णयोरश्विनौ तिष्ठेताम्। ललाटे रुद्रास्तिष्ठन्तु। मूर्ध्न्यादित्यास्तिष्ठन्तु। शिरसि महादेवस्तिष्ठतु। शिखायां वामदेवस्तिष्ठतु। पृष्ठे पिनाकी तिष्ठतु। पुरतः शूली तिष्ठतु। पार्श्वयोः शिवाशङ्करौ तिष्ठेताम्। सर्वतो वायुस्तिष्ठतु। ततो बहिः सर्वतोऽग्निर्ज्वालामालापरिवृतस्तिष्ठतु। सर्वेष्वङ्गेषु सर्वा देवता यथास्थानं तिष्ठन्तु। माꣳ रक्षन्तु। मम यजमानꣳ रक्षन्तु ॥

ॐ अ॒ग्निर्मे॑ वा॒चि श्रि॒तः। वाग्घृद॑ये। हृद॑यं॒ मयि॑। अ॒हम॒मृते॑। अ॒मृत॒ं ब्रह्म॑णि। वा॒युर्मे॑ प्रा॒णे श्रि॒तः। प्रा॒णो हृद॑ये। हृद॑यं॒ मयि॑। अ॒हम॒मृते॑। अ॒मृत॒ं ब्रह्म॑णि ॥ सूर्यो॑ मे॒ चक्षु॑षि श्रि॒तः। चक्षु॒र्हृद॑ये। हृद॑यं॒ मयि॑। अ॒हम॒मृते॑। अ॒मृत॒ं ब्रह्म॑णि। च॒न्द्रमा॑ मे॒ मन॑सि श्रि॒तः। मन॒ो हृद॑ये। हृद॑यं॒ मयि॑। अ॒हम॒मृते॑। अ॒मृत॒ं ब्रह्म॑णि ॥ दिशो॑ मे॒ श्रोत्रे॑ श्रि॒ताः। श्रोत्र॒ꣳ हृद॑ये। हृद॑यं॒

मयिं। अहममृतें। अमृतं ब्रह्मंणि। आपों मे रेतंसि श्रिताः। रेतो हृदंये। हृदंयं मयिं। अहममृतें। अमृतं ब्रह्मंणि॥ पृथिवी मे शरीरे श्रिता। शरीरं हृदंये। हृदंयं मयिं। अहममृतें। अमृतं ब्रह्मंणि। ओषधिवनस्पतयों मे लोमंसु श्रिताः। लोमांनि हृदंये। हृदंयं मयिं। अहममृतें। अमृतं ब्रह्मंणि॥ इन्द्रों मे बलें श्रितः। बलं हृदंये। हृदंयं मयिं। अहममृतें। अमृतं ब्रह्मंणि। पर्जन्यों मे मूर्ध्नि श्रितः। मूर्धा हृदंये। हृदंयं मयिं। अहममृतें। अमृतं ब्रह्मंणि॥ ईशांनो मे मन्यौ श्रितः। मन्युर् हृदंये। हृदंयं मयिं। अहममृतें। अमृतं ब्रह्मंणि। आत्मा मं आत्मनिं श्रितः। आत्मा हृदंये। हृदंयं मयिं। अहममृतें। अमृतं ब्रह्मंणि॥ पुनंर्म आत्मा पुनरायुरागांत्। पुनंः प्राणः पुनराकूंतमागांत्। वैश्वानरो रश्मिभिर्वावृधानः। अन्तस्तिंष्ठत्वमृतंस्य गोपाः॥ इति यथालिङ्गमङ्गानि सम्मृज्य। (अथैनं गन्धाक्षतपत्रपुष्पधूपदीपनैवेद्यताम्बूलैरा-राधयेत्।)

(अथैनं प्रसादयति) आराधितो मनुष्यैस्त्वं सिद्धैर्देवासुरादिभिः। आराधयामि भक्त्या त्वानुगृहाण महेश्वर॥ त्र्यंम्बकं यजामहे सुगन्धिं पुंष्टिवर्धनम्। उर्वारुकमिव बन्धंनान्मृत्योर्मुंक्षीय माऽमृतांत्॥ (अथैन-मावाहयति) आत्वां वहन्तु हरंयः सचेतसः श्वेतैरश्वैः सह केतुमद्भिः। वातांजवैर्बलंवद्भिर्मनोंजवैरायांहि शीघ्रं ममं हव्यायं शर्वोम्॥ ईशानमा-वाहयामि॥ स्वामिन्सर्वजगन्नाथ यावत्पूजावसानकम्। तावत्त्वं प्रीतिभावेन बिम्बेऽस्मिन्सन्निधिं कुरु॥ आवाहितो भव। संस्थापितो भव। सन्निहितो भव। सन्निरुद्धो भव। अवकुण्ठितो भव। सुप्रसन्नो भव। वरदो भव। क्षमस्व। सान्निध्यं कुरु॥

(अथास्मा आसनं ददाति) सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः। भवेभवे नातिभवे भवस्व माम्। पाद्यं समर्पयामि॥ भवोद्भवाय नमः। अर्घ्यं समर्पयामि॥ रुद्राय नमः। आचमनीयं समर्पयामि॥ (अथैनं स्नापयति) आपोहिष्ठा इति तिसृभिः। हिरण्यवर्णाः शुचयः पावकाः इति चतसृभिः। पवमानः सुवर्जनः ........जातवेदा मोर्जन्यन्त्या पुनातु॥ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः..... योनिमसतश्च विवः॥ कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे। वोचेम शन्तमꣳ हृदे॥ सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु॥ सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु। पुरुषो वै रुद्रः सन्महो नमो नमः॥ कयानश्चित्र आभुवदूती सदा वृधः सखा। कया शचिष्ठया वृता॥ आपो वा इदꣳ सर्वं विश्वा भूतान्यापः प्राणा वा आपः पशव आपोऽन्नमापोऽमृतमापः सम्राडापो विराडापः स्वराडापश्छन्दाꣳस्यापो ज्योतीꣳष्यापो यजूꣳष्यापः सत्यमापः सर्वा देवता आपो भूर्भुवस्सुवराप ओम्॥ स्नानं समर्पयामि॥ वामदेवाय नमः। वस्त्रं समर्पयामि॥ ज्येष्ठाय नमः। उत्तरीयं समर्पयामि॥ श्रेष्ठाय नमः। उपवीतं समर्पयामि॥ रुद्राय नमः। आचमनीयं समर्पयामि॥ कालाय नमः। गन्धं समर्पयामि॥ कलविकरणाय नमः। अक्षतान् समर्पयामि॥ बलविकरणाय नमः। पुष्पं समर्पयामि॥ बलाय नमः। धूपं समर्पयामि॥ बलप्रमथनाय नमः। दीपं समर्पयामि॥ सर्वभूतदमनाय नमः। नैवेद्यं समर्पयामि॥ रुद्राय नमः। आचमनीयं समर्पयामि॥ मनोन्मनाय नमः। ताम्बूलं समर्पयामि॥

(अथाष्टभिर्मन्त्रैरष्टौ पुष्पाणि ददाति) ॐ भवाय देवाय नमः। अर्कपुष्पं समर्पयामि॥ ॐ शर्वाय देवाय नमः। चम्पकपुष्पं समर्पयामि॥ ॐ ईशानाय देवाय नमः। पुन्नागपुष्पं समर्पयामि॥ ॐ पशुपतये देवाय नमः। नन्द्यावर्तपुष्पं समर्पयामि॥ ॐ रुद्राय देवाय नमः। पाटलपुष्पं समर्पयामि॥ ॐ उग्राय देवाय नमः। बृहतीपुष्पं समर्पयामि॥ ॐ भीमाय देवाय नमः। करवीरपुष्पं समर्पयामि॥ ॐ महते देवाय नमः। द्रोणपुष्पं समर्पयामि॥

(अथाद्भिस्तर्पयति) ॐ भवं देवं तर्पयामि॥ ॐ शर्वं देवं तर्पयामि॥ ॐ ईशानं देवं तर्पयामि॥ ॐ पशुपतिं देवं तर्पयामि॥ ॐ रुद्रं देवं तर्पयामि॥ ॐ उग्रं देवं तर्पयामि॥ ॐ भीमं देवं तर्पयामि॥ ॐ महान्तं देवं तर्पयामि॥

(अथास्याघोरतनूरुपतिष्ठते) अघोरेँभ्योऽथ घोरेँभ्यो घोरघोरंतरेभ्यः। सर्वेँभ्यः सर्वशर्वेँभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः॥

(अथ रुद्रगायत्रीं जपेत्) तत्पुरुषाय विद्महे महादेवायं धीमहि। तन्नो रुद्रः प्रचोदयाँत्॥ सहस्रकृत्व आवर्तयेच्छतकृत्वोऽपरिमितकृत्वो वा दशावरम्।

(अथैनमाशिषमाशास्ते) ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्॥

आशाँस्तेऽयं यजमानोऽसौ। आयुराशाँस्ते। सुप्रजास्त्वमाशाँस्ते। सजातवनस्यामाशाँस्ते। उत्तरां देवयज्यामाशाँस्ते। भूयो हविष्करणमाशाँस्ते। दिव्यन्धामाशाँस्ते। विश्वं प्रियमाशाँस्ते। यदनेन हविषाऽऽशाँस्ते।

तदंश्यात्तदंध्यात्। तदंस्मै देवा रासन्ताम्। तदुग्निर्देवो देवेभ्यो वनंते। वयमुग्नेर्मानुंषाः। इष्टं चं वीतं चं। उभे चं नो द्यावांपृथिवी अ॑ःहंसस्पाताम्। इह गतिंर्वामस्येदं चं। नमों देवेभ्यंः॥

अथास्य मूर्ध्नि कलशधारया सन्ततमभिषिञ्चञ्जपेत् - नमस्ते रुद्र मन्यव इत्येकादशानुवाकान्। सर्वो वै रुद्रः इति त्रीननुवाकान्। सद्योजातमिति पञ्चानुवाकान्। इमा रुद्राय इति द्वादशर्चानन्यांश्च यथाशक्ति रौद्रमन्त्रान्। एवमेकादशकृत्वो जपेत्। जपान्ते जपान्ते अग्नाविष्णू सजोषसा इत्येकादशानुवाकानामेकैकमनुवाकं जपेत्। सर्वेषामन्ते अथास्मा आसनं ददाति सद्योजातमित्यादिना पुनराराधयेत्। पायसादिमहाहविर्निवेदयेद्रौद्रीभिस्तुतिभिस्तुन्वन्ति॥

तदेतद्रुद्रस्नानार्चनं पापक्षयार्थी व्याधिविमोचनार्थी श्रीकामः शान्तिकामः पुष्टिकामस्तुष्टिकाम आयुष्यकाम आरोग्यकामो मोक्षकामश्च कुर्यात्। अथ यथाशक्ति दक्षिणां ददाति - दश गावः, सुवर्णभूषिता ऋषभैकादशास्तदभाव एकां गां दद्यादित्याह भगवान्बोधायनः॥

# आशीर्मन्त्राः

[1]ॐ हिमा इत्याह शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठत्येषा वै सूर्मी कर्णकावत्येतया ह स्म वै देवा असुराणाꣳ शततर्हाꣳ स्तृꣳहन्ति यदेतया समिधमादधाति वज्रमेवैतच्छतघ्नीं यजमानो भ्रातृव्याय प्रहरति स्तृत्या अछम्बट्कारꣳ सन्त्वमग्ने सूर्यस्य वर्चसा गथा इत्याहैतत्त्व-मसीदमहं भूयासमिति वावैतदाह त्वमग्ने सूर्यवर्चा असीत्याहाऽऽशिष-मेवैतामाशास्ते ॥

[2]य एवं विद्वानग्निमुपतिष्ठते परि त्वाग्ने पुरं वयमित्याह परिधिमेवैतं परि दधात्यस्कन्दायाग्ने गृहपत इत्याह यथायजुरेवैतच्छतꣳ हिमा इत्याह शतन्त्वा हेमन्तानिन्धिषीयेति वावैतदाह पुत्रस्य नाम गृह्णात्यन्नादमेवैनङ्करोति तामाशिषमाशासे तन्तवे ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रोऽजातः स्यात्तेजस्व्येवास्य ब्रह्मवर्चसी पुत्रो जायते तामाशिषमाशासेऽमुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो जातः स्यात्तेज एवास्मिन्ब्रह्मवर्चसं दधाति ॥

[3]प्राजायत तस्मादेव यजमानो मिथुनेन प्र जायते वेदोऽसि वित्तिरसि विदेयेत्याह वेदेन वै देवा असुराणां वित्तं वेद्यमविन्दन्त तद्वेदस्य वेदत्वं यद्यद्भ्रातृव्यस्याभिध्यायेत्तस्य नाम गृह्णीयात्तदेवास्य सर्वं वृङ्क्ते घृतवन्तं

कुलायिनꣳ रायस्पोषꣳ सहस्रिणं वेदो ददातु वाजिनमित्याह प्र सहस्रं पशूनाँप्नोत्यास्यं प्रजायाँ वाजी जायते य एवं वेद ॥

[1]सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति पुण्डरिस्रजां प्र यच्छति दशभिर्वत्सतरैः सोमं क्रीणाति दशपेयो भवति शतं ब्राह्मणाः पिबन्ति सप्तदशꣳ स्तोत्रं भवति प्राकाशावध्वर्यवे ददाति स्रजमुद्गात्रे रुक्मꣳ होत्रेऽश्वं प्रस्तोतृप्रतिहर्तृभ्यां द्वादश पष्ठौहीर्ब्रह्मणे वशां मैत्रावरुणायर्षभं ब्राह्मणाच्छꣳसिने वाससी नेष्टापोतृभ्याꣳ स्थूरि यवाऽचितमच्छावाकायाऽनड्वाहमग्नीधे भार्गवो होता भवति श्रायन्तीयं ब्रह्मसामं भवति वारवन्तीयमग्निष्टोमसामꣳ सारस्वतीरपो गृह्णाति ॥

[2]एतया संज्ञान्याऽयाजयदग्नये वसुमते पुरोडाशमष्टाकपालं निरवपत्सोमाय रुद्रवते चरुमिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं वरुणायाऽऽदित्यवते चरुं ततो वा इन्द्रं देवा ज्यैष्ठ्यायाभि समजानत यस्समानैर्मिथो विप्रियः स्यात्तमेतया संज्ञान्या याजयेदग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेत्सोमाय रुद्रवते चरुमिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं वरुणायाऽऽदित्यवते चरुमिन्द्रमेवैनं भूतं ज्यैष्ठ्याय समाना अभि सं जानते वसिष्ठस्समानानां भवति ॥

[3]कुरुते तस्मादाहुर्यश्चैवं वेद यश्च न कथा पुत्रस्य केवलं कथा

साधारणं पितुरित्यस्कंन्नमेव तद्यत्प्रयाजेष्विष्टेषु स्कन्दंति गायत्र्येव तेन गर्भं धत्ते सा प्रजां पशून् यजमानाय प्रजनयति ॥

[१]यो॑ऽशुं गृह्णात्या नः प्राण एतु परावत इत्याहाऽऽयुरेव प्राणमात्मन्धत्तेऽमृतमसि प्राणाय त्वेति हिरण्यमभिव्यनित्यमृतं वै हिरण्यमायुः प्राणोऽमृतेनैवाऽऽयुरात्मन्धत्ते शतमानं भवति शतायुः पुरुषश्शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठत्युप उप स्पृशति भेषजं वा आपो भेषजमेव कुरुते ॥

[२]क्षीयेत सारस्वतौ होमौ पुरस्ताञ्जुहुयादमावास्यां वै सरस्वत्यनुलोममेवैनावालभतेऽमुमाप्यायमानमन्वाप्यायत आग्नावैष्णवमेकादशकपालं पुरस्तान्निर्वपेत्सरस्वत्यै चरुꣳ सरस्वते द्वादशकपालं यदाग्नेयो भवत्यग्निर्वै यज्ञमुखं यज्ञमुखमेवर्द्धिं पुरस्ताद्धत्ते यद्वैष्णवो भवति यज्ञो वै विष्णुर्यज्ञमेवाऽऽरभ्य प्रतनुते सरस्वत्यै चरुर्भवति सरस्वते द्वादशकपालोऽमावास्यां वै सरस्वती पूर्णमासः सरस्वान्तावेव साक्षादारभत ऋध्नोत्याभ्यां द्वादशकपालः सरस्वते भवति मिथुनत्वाय प्रजात्यै मिथुनौ गावौ दक्षिणा समृध्यै ॥

[३]उपश्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितञ्जगत् । स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो अप सेध शत्रून् ॥ आ क्रंदय बलमोजो न आधा निष्टनिहि दुरिता बाधमानः । अप प्रोथ दुंदुभे दुच्छुनाꣳ इत इंद्रस्य मुष्टिरसि वीडयस्व ॥ आऽमूरज प्रत्यावर्तयेमाः केतुमद्दुन्दुभिर्वावदीति । समश्वपर्णाश्चरंति नो नरोऽस्माकमिंद्र रथिनो जयन्तु ॥

---

१ तै सं 3-3-९

[1]एव प्रतिं तिष्ठति यो वा अꣳशोरायतनं वेदाऽऽयतनवान्भवति वामदेव्यमिति साम तद्वा अस्यायतनं मनसा गायमानो गृह्णात्यायतनवानेव भवति यदध्वर्युरꣳशुं गृह्णन्नार्धयेदुभाभ्यान्नर्ध्येताध्वर्यवे च यजमानाय च यदर्धयेदुभाभ्यामृध्येतानवानं गृह्णाति सैवास्यर्धिर् हिरण्यमभि व्यनित्यमृतं वै हिरण्यमायुः प्राण आयुषैवामृतमभि धिनोति शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रतिं तिष्ठति ॥

[2]इत्याह स्योनैवैनꣳ सुषदा सुशेवा भूताऽऽविशति नैनꣳ हिनस्ति ब्रह्मवादिनो वदन्ति सहस्रꣳ सहस्रतम्यन्वेती३ सहस्रतमीꣳ सहस्रा३मिति यत्प्राचीमुत्सृजेत्सहस्रꣳ सहस्रतम्यान्वियात्तत्सहस्रमप्रज्ञात्रꣳ सुवर्गं लोकं न प्रजानीयात्प्रतीचीमुत्सृजति ताꣳ सहस्रमनु पर्यावर्तते सा प्रजानती सुवर्गं लोकमेति यजमानमभ्युत्सृजति क्षिप्रे सहस्रं प्रजायत उत्तमा नीयते प्रथमा देवान्गच्छति ॥

[3]तस्माद्वाजपेययाजी पूतो मेध्यो दक्षिण्यः। प्राङुद्रवति सोमग्रहैः। अमुमेव तैर्लोकमभिजयति। प्रत्यङ्सुराग्रहैः। इममेव तैर्लोकमभिजयति। प्रतिष्ठन्ति सोमग्रहैः। यावदेव सत्यम्। तेन सूयते। वाजसृद्भ्यः सुराग्रहान् हरंति। अनृतेनैव विशꣳ सꣳसृजति। हिरण्यपात्रं मधोः पूर्णं ददाति। मधव्योऽसानीति। एकधा ब्रह्मण उपहरति। एकधैव यजमान आयुस्तेजो दधाति ॥

[1]त्र्यंम्बकं यजामह इत्यांह। मृत्योर्मुंक्षीय माऽमृतादिति वावैतदांह। उत्किंरंति। भगंस्य लीप्संते। मूतं कृत्वाऽऽसंजंति। यथा जनं यतेंऽवसं करोतिं। तादृगेव तत्। एष तें रुद्र भाग इत्यांह निरवंत्त्यै। अप्रंतीक्षमायंति। अपः परिंषिञ्चति। रुद्रस्यांतर्हिंत्यै। प्र वा एतेंऽस्माल्लोकाच्च्यंवन्ते। ये त्र्यंम्बकैश्चरंति। आदित्यं चरुं पुनरेत्य निर्वंपति। इयं वा अदिंतिः। अस्यामेव प्रतिं तिष्ठन्ति॥

[2]नमों मात्रे पृंथिव्या इत्याहाहिꣳसायै। इयंदस्यायुंरस्यायुर्मे धेहीत्यांह। आयुरेवात्मन्धंत्ते। ऊर्गस्यूर्जं मे धेहीत्यांह। ऊर्जमेवात्मन्धंत्ते। युङ्ङंसि वर्चोंऽसि वर्चो मयिं धेहीत्यांह। वर्च एवात्मन्धंत्ते। एकधा ब्रह्मण उपंहरति। एकधैव यजंमान आयुरूर्जं वर्चों दधाति। रथविमोचनीयां जुहोति प्रतिंष्ठित्यै॥

[3]इयं वै रंजता। असौ हरिंणी। यद्रुक्मौ भवंतः। आभ्यामेवैनंमुभयतः परिंगृह्णाति। वरुंणस्य वा अंभिषिच्यमांनस्यापंः। इन्द्रियं वीर्यं निरंघ्नन्। तत्सुवर्णꣳ हिरंण्यमभवत्। यद्रुक्ममंन्तर्दधाति। इन्द्रियस्यं वीर्यंस्यानिर्घाताय। शतमांनो भवति शतक्षंरः। शतायुः पुरुंषः शतेन्द्रियः। आयुंष्येवेन्द्रिये प्रतिंतिष्ठति। आयुर्वै हिरंण्यम्। आयुष्यां एवैनंमभ्यतिंक्षरन्ति। तेजो वै हिरंण्यम्। तेजस्यां एवैनंमभ्यतिंक्षरन्ति। वर्चो वै हिरंण्यम्। वर्चस्यां एवैनंमभ्यतिंक्षरन्ति॥

---

[१]ऐन्द्राग्नमुपसादितम् । सर्वाभ्यो वा एष देवताभ्यो जुहोति । यो॑ऽग्निहोत्रं जुहोति॑ । यथा खलु वै धेनुन्तीर्थे तर्पयति । एवमग्निहोत्री यजमानन्तर्पयति । तृप्यति प्रजया पशुभिः । प्र सुवर्गल्लोकं जानाति । पश्यति पुत्रम् । पश्यति पौत्रम् । प्र प्रजया पशुभिर्मिथुनैर्जायते । यस्यैवं विदुषो॑ऽग्निहोत्रं जुह्वति । य उ चैनदेवं वेद ॥

[२]आशिषमेवैतामाशास्ते पूर्णपात्रे । अन्ततो॑ऽनुष्टुभा । चतुष्पद्वा एतच्छन्दः प्रतिष्ठितं पवित्रियै पूर्णपात्रे भवति । अस्मिन्लोके प्रतितिष्ठानीति । अस्मिन्नेव लोके प्रतितिष्ठति । अथो वाग्वा अनुष्टुक् । वाङ्मिथुनम् । आपो रेतः प्रजननम् । एतस्माद्वै मिथुनाद्विद्योतमानः स्तनयन्वर्षति । रेतस्सिञ्चन् । प्रजाः प्रजनयन् । यद्वै यज्ञस्य ब्रह्मणा युज्यते । ब्रह्मणा वै तस्य विमोकः । अद्भिश्शान्तिः । विमुक्तं वा एतरहि योक्त्रं ब्रह्मणा । आदायैनत्पत्नी सहाप उपगृह्णीते शान्त्यै । अञ्जलौ पूर्णपात्रमानयति । रेत एवास्यां प्रजां दधाति । प्रजया हि मनुष्यः पूर्णः । मुखं विमृष्टे । अवभृथस्यैव रूपं कृत्वोत्तिष्ठति ॥

[३]आशास्ते॑ऽयं यजमानो॑ऽसौ । आयुराशास्ते । सुप्रजास्त्वमाशास्ते । सजातवनस्यामाशास्ते । उत्तरां देवयज्यामाशास्ते । भूयो हविष्करणमाशास्ते । दिव्यं धामाऽऽशास्ते । विश्वं प्रियमाशास्ते । यदनेन हविषाऽऽशास्ते । तदश्यात्तदृध्यात् । तदस्मै देवा रासन्ताम् । तदग्निर्देवो देवेभ्यो वनते । वयमग्नेर्मानुषाः । इष्टञ्च वीतं च । उभे च नो द्यावापृथिवी अꣳहसस्पाताम् । इह गतिर्वामस्येदञ्च । नमो देवेभ्यः ॥

---

१ तै.ब्रा २-१-८ २ तै.ब्रा ३-३-१० ३ तै.ब्रा [illegible]

[1]एतैरग्निं चिन्वीत स्वर्गकामः। एतैरायुष्कामः। प्रजापशुकामो वा। पुरस्ताद्दशहोतारमुदंचमुपदधाति यावत्पदम्। हृदयं यजुंषी पत्न्यौ च। दक्षिणतः प्रांचश्चतुर्होतारम्। पश्चादुदंचं पञ्चहोतारम्। उत्तरतः प्रांच९ षड्ढोतारम्। उपरिष्टात्प्राञ्चं९ सप्तहोतारम्। हृदयं यजू९षि पत्न्यंश्च। यथावकाशं ग्रहान्। यथावकाशं प्रतिग्रहाल्लोकंपृणाश्च। सर्वा हास्यैता देवताः प्रीता अभीष्टा भवन्ति ॥

[2]नर्यं प्रजां मे गोपाय। अमृतत्वाय जीवसे। जाताञ्जनिष्यमाणां च। अमृते सत्ये प्रतिष्ठिताम् ॥ अथर्व पितुं मे गोपाय। रसमन्नमिहाऽऽयुषे। अदब्धायोऽशीततनो। अविषन्नः पितुं कृणु ॥ श९स्यं पशून्मे गोपाय। द्विपादो ये चतुष्पदः। अष्टाशफाश्च य इहाग्ने। येचैकशफा आशुगाः ॥ सप्रथ सभां मे गोपाय। ये च सभ्याः सभासदः। तानिन्द्रियावतः कुरु। सर्वमायुरुपासताम् ॥ अहे बुध्निय मन्त्रं मे गोपाय। यमृषयस्त्रैविदा विदुः। ऋचस्सामानि यजू९षि। सा हि श्रीरमृता सताम् ॥ चतुश्शिखंडा युवतिस्सुपेशाः। घृतप्रतीका भुवनस्य मध्ये। मर्मृज्यमाना महते सौभगाय। मह्यं धुक्ष्व यजमानाय कामान्। इहैव संतत्रं सतो वो अग्नयः। प्राणेन वाचा मनसा बिभर्मि। तिरो मा सन्तमायुर्मा प्रहासीत्। ज्योतिषा वो वैश्वानरेणोपतिष्ठे। पंचधाग्नीन्व्यंक्रामत्। विराट्त्सृष्टा प्रजापतेः। ऊर्ध्वारोहद्रोहिणी। योनिरग्नेः प्रतिष्ठितिः ॥

[3]अग्ने तेजस्विन्तेजस्वी त्वं देवेषु भूयास्तेजस्वन्तं मामायुष्मन्तं

---

१. तै.ब्रा. ३-१२-५. २. तै.ब्रा. १-२-१. ३. तै.सं. ३-३-१.

वर्चस्वन्तं मनुष्येषु कुरु दीक्षायै च त्वा तपसश्च तेजसे जुहोमि तेजोविदसि तेजो मा मा हासीन्माऽहं तेजो हासिषं मा मां तेजो हासीदिन्द्रौजस्विन्नोजस्वी त्वं देवेषु भूया ओजस्वन्तं मा मायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु ब्रह्मणश्च त्वा क्षत्रस्य चौजसे जुहोम्योजोविदस्योजो मा मा हासीन्माहमोजो हासिषं मा मामोजो हासीत्सूर्य भ्राजस्विन्भ्राजस्वी त्वं देवेषु भूया भ्राजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु वायोश्च त्वाऽपाञ्च भ्राजसे जुहोमि सुवर्विदसि सुवर्मा मा हासीन्माहꣳ सुवर्हासिषं मा माꣳ सुवर्हासीन्मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ॥

[1]अग्ने शर्ध महते सौभगाय । तव द्युम्नान्युत्तमानि सन्तु । सञ्जास्पत्यꣳ सुयममाकृणुष्व । शत्रूयतामभितिष्ठा महाꣳसि ॥

प्रेतो मुञ्चाति नामुतः सुबद्धाममुतस्करत् । यथेयमिन्द्र मीढ्वस्सुपुत्रा सुभगा संती । इमां त्वमिन्द्र मीढ्वस्सुपुत्राꣳ सुभगां कृणु । दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि । अग्निरेतु प्रथमो देवतानाꣳ सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयꣳ राजा वरुणोऽनुमन्यतां यथेयꣳ स्त्रीपौत्रमघं न रोदात् । इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः । अशूँन्योपस्था जीवतामस्तु माता पौत्रमानन्दमभि प्रबुध्यतामियम् ॥

[2]स्वादुषꣳसदः पितरो वयोधाः कृच्छ्रेश्रितश्शक्तीवन्तो गभीराः । चित्रसेना इषुबला अमृध्राः सतो वीरा उरवो व्रातसाहाः ॥ ब्राह्मणासः

१. तै.ब्रा. २-४-१. २. तै.सं. ४-६-६.

पितरस्सोम्यासश्शिवे नो द्यावापृथिवी अनेहसा । पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो अघशंऽस ईशत ॥

[१]वसवस्त्वा रुद्रैः पुरस्तात्पान्तु पितरस्त्वा यमराजानः पितृभिर्दक्षिणतः पान्त्वादित्यास्त्वा विश्वैर्देवैः पश्चात्पान्तु द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतः पान्तु देवास्त्वेन्द्रज्येष्ठा वरुणराजानोऽधस्ताच्चोपरिष्टाच्च पान्तु ॥

येन देवा ज्योतिषोर्ध्वा उदायन् येनाऽऽदित्या वसवो येन रुद्राः । येनाङ्गिरसो महिमानमानशुस्तेनैतु यजमानस्स्वस्ति ॥

यथा खलु वै धेनुं तीर्थे तर्पयति । एवमग्निहोत्री यजमानं तर्पयति । तृप्यति प्रजया पशुभिः । प्र सुवर्गं लोकं जानाति । पश्यति पुत्रम् । पश्यति पौत्रम् । प्र प्रजया पशुभिर्मिथुनैर्जायते ॥

यो वै तां ब्रह्मणो वेद । अमृतेनावृतां पुरीम् । तस्मै ब्रह्म च ब्रह्मा च । आयुः कीर्तिं प्रजां ददुः ॥

धाता रातिस्सवितेदञ्जुषन्तां प्रजापतिर्निधिपतिर्नो अग्निः । त्वष्टा विष्णुः प्रजया सऽरराणो यजमानाय द्रविणन्दधातु ॥

सुमङ्गलीरियं वधूरिमाऽ समेत पश्यत । सौभाग्यमस्यै दत्वा याथास्तं विपरेतन ॥



# शीक्षोपनिषत्

**तैत्तिरीयोपनिषत्, प्रपाठकः - १**

ॐ शं नो॑ मि॒त्रः शं वरु॑णः । शं नो॑ भवत्वर्य॒मा । शं न॒ इन्द्रो॒ बृह॒स्पतिः॑ । शं नो॒ विष्णु॑रुरुक्र॒मः । नमो॒ ब्रह्म॑णे । नम॑स्ते वायो । त्वमे॒व प्र॒त्यक्षं॒ ब्रह्मा॑सि । त्वमे॒व प्र॒त्यक्षं॒ ब्रह्म॑ वदिष्यामि । ऋ॒तं व॑दिष्यामि । स॒त्यं व॑दिष्यामि । तन्माम॑वतु । तद्व॒क्तार॑मवतु । अव॑तु॒ माम् । अव॑तु व॒क्तार॑म् । ॐ शान्ति॒ः शान्ति॒ः शान्तिः॑ ॥

ॐ शीक्षां व्याँ॑ख्यास्या॒मः । वर्ण॒ः स्वरः । मात्रा॒ बलम् । साम॑ सन्ता॒नः । इत्युक्तः शीँ॑क्षाध्या॒यः ॥ (शीक्षां पञ्च)

स॒ह नौ॒ यशः । स॒ह नौ ब्रह्मव॒र्चसम् । अथातः स॑ꣳहिताया उ॑पनिषदं॑ व्याँ॑ख्यास्या॒मः । पञ्चस्वधिक॑रणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधि-प्रजमध्या॒त्मम् । ता महासꣳहिता इ॑त्याच॒क्षते । अथा॑धिल॒ोकम् । पृथिवी पूँ॑र्वरू॒पम् । द्यौरुत्त॑ररू॒पम् । आका॑शः स॒न्धिः ॥ वायु॑ः सन्धा॒नम् । इत्य॑धिल॒ोकम् । अथा॑धिज्यौ॒तिषम् । अग्निः पूँ॑र्वरू॒पम् । आदित्य उत्त॑ररू॒पम् । आ॑पः स॒न्धिः । वैद्यु॑तः सन्धा॒नम् । इत्य॑धिज्यौ॒तिषम् । अथा॑धिवि॒द्यम् । आचार्यः पूँ॑र्वरू॒पम् ॥ अन्तेवास्युत्त॑ररू॒पम् । वि॑द्या स॒न्धिः । प्रवचन॑ꣳ सन्धा॒नम् । इत्य॑धिवि॒द्यम् । अथाधि॒प्रजम् । माता पूँ॑र्वरू॒पम् । पितोत्त॑ररू॒पम् । प्र॑जा स॒न्धिः । प्रजनन॑ꣳ सन्धा॒नम् । इत्यधि॒प्रजम् ॥ अथाध्या॒त्मम् । अधरा

हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक्सन्धिः । जिह्वा सन्धानम् । इत्यध्यात्मम् । इतीमा महासꣳहिताः । य एवमेता महासꣳहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ॥ (सन्धिराचार्यः पूर्वरूपमित्यधिप्रजं लोकेन)

यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात्सम्बभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देवधारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधयाऽपिहितः । श्रुतं मे गोपाय । आवहन्ती वितन्वाना ॥ कुर्वाणा चीरमात्मनः । वासाꣳसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमावह । लोमशां पशुभिः सह स्वाहा । आ मा यन्तु ब्रह्मचारिणः स्वाहा । वि माऽऽयन्तु ब्रह्मचारिणः स्वाहा । प्र माऽऽयन्तु ब्रह्मचारिणः स्वाहा । दमायन्तु ब्रह्मचारिणः स्वाहा । शमायन्तु- ब्रह्मचारिणः स्वाहा ॥ यशो जनेऽसानि स्वाहा । श्रेयान् वस्यसोऽसानि स्वाहा । तं त्वा भग प्रविशानि स्वाहा । स मा भग प्रविश स्वाहा । तस्मिन्त्सहस्रशाखे । निभगाऽहं त्वयि मृजे स्वाहा । यथाऽऽपः प्रवताऽऽयन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरायन्तु सर्वतः स्वाहा । प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व ॥ (वितन्वाना शमायन्तु ब्रह्मचारिणः स्वाहा धातरायन्तु सर्वतः स्वाहैकं च)

भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः । तासामु ह स्मैतां चतुर्थीम् । माहाचमस्यः प्रवेदयते । मह इति । तद्ब्रह्म । स आत्मा । अङ्गान्यन्या देवताः । भूरिति वा अयं लोकः । भुव इत्यन्तरिक्षम् । सुवरित्यसौ

लोकः ॥ मह इत्यादित्यः । आदित्येन वाव सर्वे लोका महीयन्ते । भूरिति वा अग्निः । भुव इति वायुः । सुवरित्यादित्यः । मह इति चन्द्रमाः । चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते । भूरिति वा ऋचः । भुव इति सामानि । सुवरिति यजूꣳषि ॥ मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा महीयन्ते । भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः । मह इत्यन्नम् । अन्नेन वाव सर्वे प्राणा महीयन्ते । ता वा एताश्चतस्रश्चतुर्धा । चतस्रश्चतस्रो व्याहृतयः । ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति ॥ (असौ लोको यजूꣳषि वेद द्वे च)

स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः । अन्तरेण तालुके । य एष स्तन इवावलम्बते । सेन्द्रयोनिः । यत्रासौ केशान्तो विवर्तते । व्यपोह्य शीर्षकपाले । भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ ॥ सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम् । वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एतत्ततो भवति । आकाशशरीरं ब्रह्म । सत्यात्म प्राणारामं मन आनन्दम् । शान्तिसमृद्धममृतम् । इति प्राचीनयोग्योपास्व ॥ (वायावमृतमेकं च)

पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः । अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि । आप ओषधयो वनस्पतय आकाश आत्मा । इत्यधिभूतम् । अथाध्यात्मम् । प्राणो व्यानोऽपान उदानः समानः । चक्षुः श्रोत्रं मनो वाक्त्वक् । चर्म माꣳसꣳस्नावास्थि मज्जा । एतदधिविधाय ऋषिरवोचत् । पाङ्क्तं वा इदꣳ सर्वम् । पाङ्क्तेनैव पाङ्क्तꣳस्पृणोतीति ॥ (सर्वमेकं च)

ओमिति ब्रह्म। ओमितीदꣳसर्वम्। ओमित्येतदनुकृति ह स्म वा अप्योश्रावयेत्याश्रावयन्ति। ओमिति सामानि गायन्ति। ओꣳशोमिति शस्त्राणि शꣳसन्ति। ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति। ओमिति ब्रह्मा प्रसौति। ओमित्यग्निहोत्रमनुजानाति। ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति। ब्रह्मैवोपाप्नोति ॥ (ॐ दश)

ऋतञ्च स्वाध्यायप्रवचने च। सत्यञ्च स्वाध्यायप्रवचने च। तपश्च स्वाध्यायप्रवचने च। दमश्च स्वाध्यायप्रवचने च। शमश्च स्वाध्यायप्रवचने च। अग्नयश्च स्वाध्यायप्रवचने च। अग्निहोत्रं च स्वाध्यायप्रवचने च। अतिथयश्च स्वाध्यायप्रवचने च। मानुषं च स्वाध्यायप्रवचने च। प्रजा च स्वाध्यायप्रवचने च। प्रजनश्च स्वाध्यायप्रवचने च। प्रजातिश्च स्वाध्यायप्रवचने च। सत्यमिति सत्यवचा राथीतरः। तप इति तपोनित्यः पौरुशिष्टिः। स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः। तद्धि तपस्तद्धि तपः ॥ (प्रजा च स्वाध्यायप्रवचने च षट् च)

अहं वृक्षस्य रेरिवा। कीर्तिः पृष्ठं गिरेरिव। ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि। द्रविणꣳ सवर्चसम्। सुमेधा अमृतोक्षितः। इति त्रिशङ्कोर्वेदानुवचनम् ॥ (अहꣳ षट्)

वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति। सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् ॥

देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि । नो इतराणि । यान्यस्माकꣳ सुचरितानि । तानि त्वयोपास्यानि ॥ नो इतराणि । ये के चास्मच्छ्रेयाꣳसो ब्राह्मणाः । तेषां त्वयासने न प्रश्वसितव्यम् । श्रद्धया देयम् । अश्रद्धयाऽदेयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् । अथ यदि ते कर्मविचिकित्सा वा वृत्त विचिकित्सा वा स्यात् ॥ ये तत्र ब्राह्मणाः सम्मर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन्न् । तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु । ये तत्र ब्राह्मणाः सम्मर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तेषु वर्तेरन्न् ॥ तथा तेषु वर्तेथाः । एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमु चैतदुपास्यम् ॥

(स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यं तानि त्वयोपास्यानि स्यात्तेषु वर्तेरन्त्सप्त च)

शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मावादिषम् । ऋतमवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद्वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः ॥ (सत्यमवादिषं पञ्च च) (शं नः शीक्षाꣳ सह नौ यश्छन्दसां भूः सयः पृथिव्योमित्यृतं चाहं वेदमनूच्य शं नो द्वादश । शं नो मह इत्यादित्यो नो इतराणि त्रयोविꣳशतिः । शं नो वक्तारम्)

# ब्रह्मोपनिषत्

**तैत्तिरीयोपनिषत्, प्रपाठकः - २**

ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै। ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ ब्रह्मविदाप्नोति परम्। तदेषाऽभ्युक्ता। सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान्कामान्त्सह। ब्रह्मणा विपश्चितेति। तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्। अन्नात्पुरुषः। स वा एष पुरुषोऽन्नरसमयः। तस्येदमेव शिरः। अयं दक्षिणः पक्षः। अयमुत्तरः पक्षः। अयमात्मा। इदं पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति ॥

अन्नाद्वै प्रजाः प्रजायन्ते। याः काश्च पृथिवीँश्रिताः। अथो अन्नेनैव जीवन्ति। अथैनदपि यन्त्यन्ततः। अन्नँ हि भूतानां ज्येष्ठम्। तस्मात्सर्वौषधमुच्यते। सर्वं वै तेऽन्नमाप्नुवन्ति। येऽन्नं ब्रह्मोपासते। अन्नँ हि भूतानां ज्येष्ठम्। तस्मात्सर्वौषधमुच्यते। अन्नाद्भूतानि जायन्ते। जातान्यन्नेन वर्धन्ते। अद्यतेऽत्ति च भूतानि। तस्मादन्नं तदुच्यत इति। तस्माद्वा एतस्मादन्नरसमयात्। अन्योऽन्तर आत्मा प्राणमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य प्राण एव शिरः। व्यानो दक्षिणः पक्षः। अपान उत्तरः पक्षः। आकाश आत्मा। पृथिवी पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति ॥

प्राणं देवा अनुप्राणन्ति । मनुष्याः पशवश्च ये । प्राणो हि भूताना मायुः । तस्मात्सर्वायुषमुच्यते । सर्वमेव त आयुर्यन्ति । ये प्राणं ब्रह्मोपासते । प्राणो हि भूतानामायुः । तस्मात्सर्वायुषमुच्यत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्मात्प्राणमयात् । अन्योऽन्तर आत्मा मनोमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य यजुरेव शिरः । ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥

यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचनेति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्मान्मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग आत्मा । महः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥

विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च । विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद्वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्वान्कामान्त्समश्नुत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥

असंन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुरिति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य। अथातोऽनुप्रश्नाः। उताविद्वानमुं लोकं प्रेत्य। कश्चन गच्छती ३। आहो विद्वानमुं लोकं प्रेत्य। कश्चित्समश्नुता ३ उ। सोऽकामयत। बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा। इद॑ सर्वमसृजत। यदिदं किञ्च। तत्सृष्ट्वा। तदेवानुप्राविशत्। तदनुप्रविश्य। सच्च त्यच्चाभवत्। निरुक्तं चानिरुक्तं च। निलयनं चानिलयनं च। विज्ञानं चाविज्ञानं च। सत्यं चानृतं च सत्यमभवत्। यदिदं किञ्च। तत्सत्यमित्याचक्षते। तदप्येष श्लोको भवति॥

असद्वा इदमग्र आसीत्। ततो वै सदजायत। तदात्मान॑ स्वयमकुरुत। तस्मात्तत्सुकृतमुच्यत इति। यद्वै तत्सुकृतम्। रसो वै सः। रस॑ ह्येवायं लब्ध्वाऽऽनन्दी भवति। को ह्येवान्यात्कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्। एष ह्येवाऽऽनन्दयाति। यदा ह्येवैष एतस्मिन्नदृश्येऽ-नात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति। यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति। तत्त्वेव भयं विदुषोऽमन्वानस्य। तदप्येष श्लोको भवति॥

भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चम इति। सैषाऽऽनन्दस्य मीमा॑सा भवति। युवा स्यात्साधुयुवाध्यायकः। आशिष्ठो दृढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वा

वित्तस्यं पूर्णा स्यात्। स एको मानुषं आनन्दः। ते ये शतं मानुषां आनन्दाः ॥ स एको मनुष्यगन्धर्वाणांमानन्दः। श्रोत्रियस्य चाकामंहतस्य। ते ये शतं मनुष्यगन्धर्वाणांमानन्दाः। स एको देवगन्धर्वाणांमानन्दः। श्रोत्रियस्य चाकामंहतस्य। ते ये शतं देवगन्धर्वाणांमानन्दाः। स एकः पितृणां चिरलोकलोकानांमानन्दः। श्रोत्रियस्य चाकामंहतस्य। ते ये शतं पितृणां चिरलोकलोकानांमानन्दाः। स एक आजानजानां देवानांमानन्दः ॥ श्रोत्रियस्य चाकामंहतस्य। ते ये शतमाजानजानां देवानांमानन्दाः। स एकः कर्मदेवानां देवानांमानन्दः। ये कर्मणा देवानंपियन्ति। श्रोत्रियस्य चाकामंहतस्य। ते ये शतं कर्मदेवानां देवानांमानन्दाः। स एको देवानांमानन्दः। श्रोत्रियस्य चाकामंहतस्य। ते ये शतं देवानांमानन्दाः। स एक इन्द्रंस्याऽऽनन्दः ॥ श्रोत्रियस्य चाकामंहतस्य। ते ये शतमिन्द्रंस्याऽऽनन्दाः। स एको बृहस्पतेंरानन्दः। श्रोत्रियस्य चाकामंहतस्य। ते ये शतं बृहस्पतेंरानन्दाः। स एकः प्रजापतेंरानन्दः। श्रोत्रियस्य चाकामंहतस्य। ते ये शतं प्रजापतेंरानन्दाः। स एको ब्रह्मणं आनन्दः। श्रोत्रियस्य चाकामंहतस्य ॥ स यश्चांयं पुरुषे। यश्चासांवादित्ये। स एकः। स यं एवंवित्। अस्माल्लोंका-त्प्रेत्य। एतमन्नमयमात्मानमुपंसंक्रामति। एतं प्राणमयमात्मानमुपंसंक्रामति। एतं मनोमयमात्मानमुपंसंक्रामति। एतं विज्ञानमयमात्मानमुपंसंक्रामति। एतमानन्दमयमात्मानमुपंसंक्रामति। तदप्येष श्लोंको भवति ॥

यतो वाचो निवर्तन्ते। अप्रांप्य मनंसा सह। आनन्दं ब्रह्मंणो विद्वान्। न बिभेति कुतंश्चनेति। एतꣳ ह वावं न तपति। किमहꣳ साधुं नाकरवम्।

किमहं पापमकरवमिति। स य एवं विद्वानेते आत्मान१ँ स्पृणुते। उभे ह्येवैष एते आत्मान१ँ स्पृणुते। य एवं वेद। इत्युपनिषत्॥

ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥

ब्रह्मविदिदमयमिदमेकविं१शतिरन्नादन्नरसमयात्प्राणो व्यानोऽपान आकाशः पृथिवीपुच्छ१ षड्विं१शतिः प्राणं यजुर्ऋक् सामादेशोऽथर्वाङ्गिरसः पुच्छं द्वाविं१-शतिर्यतः। श्रद्धर्त१सत्यं योगो महोऽष्टादश विज्ञानं प्रियं मोदः प्रमोद आनन्दो ब्रह्मपुच्छं द्वाविं१शतिरसन्नेवाथाष्टाविं१शतिरसत्योडश भीषास्मान्मानुषो मनुष्य-गन्धर्वाणां देवगन्धर्वाणां पितृणां चिरलोकलोकानामाजानजानां कर्मदेवानां ये कर्मणा देवानामिन्द्रस्य बृहस्पतेः प्रजापतेर्ब्रह्मणः स यश्च संक्रामत्येकपञ्चाशद्यतः कुतश्च-नैतमेकादश नव॥ (ब्रह्मविन्नव) ब्रह्मविद्य एवं वेदेत्युपनिषत्॥

# भृगूपनिषत्

**तैत्तिरीयोपनिषत्, प्रपाठकः - ३**

ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहैं। ॐ शान्तिः शान्तिः शान्तिः॥

ॐ भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तस्मा एतत्प्रोवाच। अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति। तꣳ होवाच। यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्र-यन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥

अन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्मविजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥

प्राणो ब्रह्मेति व्यजानात्। प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते। प्राणेन जातानि जीवन्ति। प्राणं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥

मनो ब्रह्मेति व्यजानात्। मनसो ह्येव खल्विमानि भूतानि जायन्ते।

मनसा जातानि जीवन्ति । मनः प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥

विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥

आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति । सैषा भार्गवी वारुणी विद्या । परमे व्योमन्प्रतिष्ठिता । य एवं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ॥

अन्नं न निन्द्यात् । तद्व्रतम् । प्राणो वा अन्नम् । शरीरमन्नादम् । प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणः प्रतिष्ठितः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ॥

अन्नं न परिचक्षीत । तद्व्रतम् । आपो वा अन्नम् । ज्योतिरन्नादम् । अप्सु ज्योतिः प्रतिष्ठितम् । ज्योतिष्यापः प्रतिष्ठिताः । तदेतदन्नमन्ने

प्रतिंष्ठितम् । स य एतदन्नमन्ने प्रतिंष्ठितं वेद प्रतिंतिष्ठति । अन्नंवानन्नादो भंवति । महान्भंवति प्रजयां पशुभिंर्ब्रह्मवर्चसेनं । महान्कीर्त्या ॥

अन्नं बहु कुंर्वीत । तद्व्रतम् । पृथिवी वा अन्नंम् । आकाशोऽन्नादः । पृथिव्यामांकाशः प्रतिंष्ठितः । आकाशे पृंथिवी प्रतिंष्ठिता । तदेतदन्नमन्ने प्रतिंष्ठितम् । स य एतदन्नमन्ने प्रतिंष्ठितं वेद प्रतिंतिष्ठति । अन्नंवानन्नादो भंवति । महान्भंवति प्रजयां पशुभिंर्ब्रह्मवर्चसेनं । महान्कीर्त्या ॥

न कञ्चन वसतौ प्रत्यांचक्षीत । तद्व्रतम् । तस्माद्यया कया च विधया बह्वंन्नं प्राप्नुयात् । अराध्यस्मा अन्नमित्याचक्षते । एतद्वै मुखतोऽन्नꣳ राद्धम् । मुखतोऽस्मा अंन्नꣳ राध्यते । एतद्वै मध्यतोऽन्नꣳ राद्धम् । मध्यतोऽस्मा अंन्नꣳ राध्यते । एतद्वा अन्ततोऽन्नꣳ राद्धम् । अन्ततोऽस्मा अंन्नꣳ राध्यते । य एवं वेद । क्षेम इंति वाचि । योगक्षेम इति प्रांणापानयोः । कर्मेति हस्तयोः । गतिरिंति पादयोः । विमुक्तिरिंति पायौ । इति मानुषींः समाज्ञाः । अथ दैवीः । तृप्तिरिंति वृष्टौ । बलमिंति विद्युति । यश इंति पशुषु । ज्योतिरिति नंक्षत्रेषु । प्रजातिरमृतमानन्द इंत्युपस्थे । सर्वमित्याकाशे । तत्प्रतिष्ठेत्युंपासीत । प्रतिष्ठांवान्भवति । तन्मह इत्युंपासीत । मंहान्भवति । तन्मन इत्युंपासीत । मानंवान्भवति । तन्नम इत्युंपासीत । नम्यन्तेऽस्मै कामाः । तद्ब्रह्मेत्युंपासीत । ब्रह्मंवान्भवति । तद्ब्रह्मणः परिमर इत्युंपासीत । पर्येणं म्रियन्ते द्विषन्तंः सपत्नाः । परि येंऽप्रियाँ भ्रातृव्याः । स यश्चांयं पुरुषे । यश्चासांवादित्ये । स एकंः । स यं एवंवित् । अस्माल्लोकात्प्रेत्य ।

एतमन्नमयमात्मानमुपंसंक्रम्य। एतं प्राणमयमात्मानमुपंसंक्रम्य। एतं मनोमयमात्मानमुपंसंक्रम्य। एतं विज्ञानमयमात्मानमुपंसंक्रम्य। एतमानन्दमय-मात्मानमुपंसंक्रम्य। इमाँल्लोकान्कामान्नीकामरूप्यंनुसञ्चरन्। एतत्साम गांयन्नास्ते। हा ३ वु हा ३ वु हा ३ वुं। अहमन्नमहमन्नमहमन्नम्। अहम-न्नादो२ऽहमन्नादो२ऽहमन्नादः। अहऽँ श्लोककृदहऽँ श्लोककृदहऽँ श्लोककृत्। अहमस्मि प्रथमजा ऋता ३ स्य। पूर्वं देवेभ्यो अमृतस्य ना ३ भायि। यो मा ददाति स इ देव मा ३ वाः। अहमन्नमन्नंमदन्तमा ३ द्मि। अहं विश्वं भुवंनमभ्यंभवा ३ म्। सुवर्न ज्योतीः। य एवं वेदं। इत्युंपनिषंत्॥

ॐ सह नांववतु। सह नौं भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विंद्विषावहैं। ॐ शान्तिः शान्तिः शान्तिः॥

(भृगुस्तस्मै यतों विशन्ति तद्विजिंज्ञासस्व त्रयोंदशान्नं प्राणो मनों विज्ञानं तद्विज्ञाय तं तपंसा द्वादंशद्वादशानन्द इति सैषा दशान्नं न निन्द्यात्प्राणः शरीरमन्नं न परिंचक्षीतापो ज्योतिरन्नं बहु कुंर्वीत पृथिव्यामांकाश एकांदशैकादश न कञ्चनैकंषष्टिर्दश)

❦❦❦

# महानारायणोपनिषत्

तैत्तिरीयोपनिषत्, प्रपाठकः - ४

ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥

ॐ अम्भस्य पारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्। शुक्रेण ज्योतीꣳषि समनुप्रविष्टः प्रजापतिश्चरति गर्भे अन्तः॥ यस्मिन्निदꣳ सञ्च विचैति सर्वं यस्मिन्देवा अधि विश्वे निषेदुः। तदेव भूतं तदु भव्यमा इदं तदक्षरे परमे व्योमन्॥ येनाऽऽवृतं खं च दिवं महीं च येनादित्यस्तपति तेजसा भ्राजसा च। यमन्तस्समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः॥ यतः प्रसूता जगतः प्रसूती तोयेन जीवान्व्यचसर्ज भूम्याम्। यदोषधीभिः पुरुषान्पशूꣳश्च विवेश भूतानि चराचराणि॥ अतः परं नान्यदणीयसꣳ हि परात्परं यन्महतो महान्तम्। यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्॥ तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्। इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः॥ तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः। तदेव शुक्रममृतं तद्ब्रह्म तदापः स प्रजापतिः॥ सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि। कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः॥ अर्धमासा मासा ऋतवः संवत्सरश्च कल्पन्ताम्। स आपः प्रदुघे उभे इमे अन्तरिक्षमथो सुवः॥ नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत्। न तस्येशे कश्चन तस्य नाम महद्यशः॥ न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्। हृदा

मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ॥ अद्भ्यः सम्भृतो हिरण्यगर्भ इत्यष्टौ ॥ एष हि देवः प्रदिशोऽनु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः । स विजायमानः स जनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति विश्वतोमुखः ॥ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् । सम्बाहुभ्यां नमति सम्पतत्रैर्द्यावापृथिवी जनयन्देव एकः ॥ वेनस्तत्पश्यन्विश्वा भुवनानि विद्वान् यत्र विश्वं भवत्येकनीळम् । यस्मिन्निद९ सञ्च वि चैक९ स ओतः प्रोतश्च विभु प्रजासु ॥ प्र तद्वोचे अमृतं नु विद्वान्गन्धर्वो नाम निहितं गुहासु । त्रीणि पदा निहिता गुहासु यस्तद्वेद सवितुः पिता सत् ॥ स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा । यत्र देवा अमृतमानशानास्तृतीये धामान्यभ्यैरयन्त ॥ परि द्यावापृथिवी यन्ति सद्यः परिलोकान्परि दिशः परि सुवः । ऋतस्य तन्तुं विततं विचृत्य तदपश्यत्तदभवत्प्रजासु ॥ परीत्य लोकान्परीत्य भूतानि परीत्य सर्वाः प्रदिशो दिशश्च । प्रजापतिः प्रथमजा ऋतस्यात्मनाऽऽत्मानमभि सम्बभूव ॥ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् ॥ उद्दीप्यस्व जातवेदोऽपघ्नन्निरृतिं मम । पशू९श्च मह्यमावह जीवनं च दिशो दिश ॥ मा नो हि९सीज्जातवेदो गामश्वं पुरुषं जगत् । अबिभ्रदग्न आगहि श्रिया मा परिपातय ॥ पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ तत्पुरुषाय विद्महे वक्रतुण्डाय, धीमहि । तन्नो दन्तिः प्रचोदयात् ॥ तत्पुरुषाय विद्महे चक्रतुण्डाय धीमहि । तन्नो नन्दिः प्रचोदयात् । तत्पुरुषाय विद्महे महासेनाय धीमहि । तन्नः

षण्मुखः प्रचोदयात् ॥ तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि । तन्नो गरुडः प्रचोदयात् ॥ वेदात्मनाय विद्महे हिरण्यगर्भाय धीमहि । तन्नो ब्रह्म प्रचोदयात् ॥ नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥ वज्रनखाय विद्महे तीक्ष्णदꣳष्ट्राय धीमहि । तन्नो नारसिꣳहः प्रचोदयात् ॥ भास्कराय विद्महे महद्द्युतिकराय धीमहि । तन्नो आदित्यः प्रचोदयात् ॥ वैश्वानराय विद्महे लालीलाय धीमहि । तन्नो अग्निः प्रचोदयात् ॥ कात्यायनाय विद्महे कन्यकुमारि धीमहि । तन्नो दुर्गिः प्रचोदयात् ॥ सहस्रपरमा देवी शतमूला शताङ्कुरा । सर्वꣳ हरतु मे पापं दूर्वा दुःस्वप्नप्रनाशिनी ॥ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषः परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ या शतेन प्रतनोषि सहस्रेण विरोहसि । तस्यास्ते देवीष्टके विधेम हविषा वयम् ॥ अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरा । शिरसा धारयिष्यामि रक्षस्व मां पदे पदे ॥ भूमिर्धेनुर्धरणी लोकधारिणी । उद्धृताऽसि वराहेण कृष्णेन शतबाहुना ॥ मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम् । मृत्तिके ब्रह्मदत्ताऽसि काश्यपेनाभिमन्त्रिता । मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् ॥ मृत्तिके प्रतिष्ठिते सर्वं तन्मे निर्णुद मृत्तिके । तया हतेन पापेन गच्छामि परमां गतिम् ॥ यत इन्द्र भयामहे ततो नो अभयङ्कृधि । मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि ॥ स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी । वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयङ्करः ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ आपान्तमन्युस्तृपलप्रभर्माधुनिः

शिमीवाञ्छरुमाँ ऋजीषी। सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः ॥ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः। स बुध्निया उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ स्योना पृथिवि भवा नृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीँ सर्वभूतानां तामिहोपह्वये श्रियम् ॥ श्रीर्मे भजतु। अलक्ष्मीर्मे नश्यतु ॥ विष्णुमुखा वै देवाश्छन्दोभिरिमाँल्लोकाननपजय्य-मभ्यजयन् ॥ महाँ इन्द्रो वज्रबाहुः षोडशी शर्म यच्छतु ॥ स्वस्ति नो मघवा करोतु हन्तु पाप्मानं योऽस्मान्द्वेष्टि ॥ सोमानँ स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं य औशिजम्। शरीरं यज्ञशमलं कुसीदं तस्मिन्त्सीदतु योऽस्मान्द्वेष्टि ॥ चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि। तेन पवित्रेण शुद्धेन पूता अति पाप्मानमरातिं तरेम ॥ सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहञ्छूर विद्वान्। जहि शत्रूँ रपमृधो नुदस्वाथाभयं कृणुहि विश्वतो नः ॥ सुमित्रा न आप ओषधयः सन्तु दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे ॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः ॥ तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः ॥

हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः। यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः ॥ यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम्। तन्न इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु पुनः पुनः ॥ नमोऽग्नयेऽप्सुमते नम

इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽद्भ्यः। यदपां क्रूरं यदमेध्यं यदशान्तं तदपगच्छतात्॥ अत्याशनादतीपानाद्यच्च उग्रात्प्रतिग्रहात्। तन्नो वरुणो राजा पाणिनां ह्यव मर्शतु॥ सोऽहमपापो विरजो निर्मुक्तो मुक्तकिल्बिषः। नाकस्य पृष्ठमारुह्य गच्छेद्ब्रह्म सलोकताम्॥ यश्चाप्सु वरुणः स पुनात्वघमर्षणः॥ इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमँ सचता परुष्णिया। असिक्निया मरुद्वृधे वितस्तयाऽऽर्जीकीये शृणुह्या सुषोमया॥ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत। ततो रात्रिरजायत ततः समुद्रो अर्णवः॥ समुद्रादर्णवादधि संवत्सरो अजायत। अहोरात्राणि विदधद्विश्वस्य मिषतो वशी॥ सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो सुवः॥ यत्पृथिव्याँ रजः स्वमान्तरिक्षे विरोदसी। इमाँ स्तदापो वरुणः पुनात्वघमर्षणः॥ पुनन्तु वसवः पुनातु वरुणः पुनात्वघमर्षणः। एष भूतस्य मध्ये भुवनस्य गोप्ता॥ एष पुण्यकृतां लोकानेष मृत्योर् हिरण्मयम्। द्यावापृथिव्योर् हिरण्मयँ सँश्रितँ सुवः॥ स नः सुवः सँशिशाधि॥ आर्द्रं ज्वलति ज्योतिरहमस्मि। ज्योतिर्ज्वलति ब्रह्माहमस्मि। योऽहमस्मि ब्रह्माहमस्मि। अहमस्मि ब्रह्माहमस्मि। अहमेवाहं मां जुहोमि स्वाहा॥ अकार्यकार्यवकीर्णी स्तेनो भ्रूणहा गुरुतल्पगः। वरुणोऽपामघमर्षणस्तस्मात्पापात्प्रमुच्यते॥ रजो भूमिस्त्वमाँ रोदयस्व प्रवदन्ति धीराः॥ आक्रान्त्समुद्रः प्रथमे विधर्मञ्जनयन्प्रजा भुवनस्य राजा। वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुः॥ (परस्ताद्यशो गुहासु मम चक्रतुण्डाय धीमहि तीक्ष्णदँष्ट्राय

धीमहि परिप्रतिष्ठितं देभुर्यच्छतु दधातनाद्यौऽर्णवः सुवो राजैकं च ॥) रुद्रो रुद्रश्च दन्तिश्च नन्दिः षण्मुख एव च। गरुडो ब्रह्म विष्णुश्च नारसिꣳहस्तथैव च। आदित्योऽग्निश्च दुर्गिश्च क्रमेण द्वादशाम्भसि। म म व च म सु वे ना व भा वै कात्यायनायं ॥

जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः॥ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्। दुर्गां देवीꣳ शरणमहं प्रपद्ये सुतरसि तरसे नमः॥ अग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा। पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः॥ विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरिताऽतिपर्षि। अग्ने अत्रिवन्मनसा गृणानोऽस्माकं बोध्यविता तनूनाम्॥ पृतनाजितꣳ सहमानमुग्रमग्निꣳ हुवेम परमात्सध-स्थात्। स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अतिदुरिताऽत्यग्निः॥ प्रत्नोषि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि। स्वां चाग्ने तनुवं पिप्रयस्वास्मभ्यं च सौभगमायजस्व॥ गोभिर्जुष्टमयुजो निषिक्तं तवेन्द्र विष्णोरनु सञ्चरेम। नाकस्य पृष्ठमभि संवसानो वैष्णवीलोक इह मादयन्ताम्॥ (अग्निश्चत्वारि च)॥

भूरन्नमग्नये पृथिव्यै स्वाहा भुवोऽन्नं वायवेऽन्तरिक्षाय स्वाहा सुवरन्नमादित्याय दिवे स्वाहा भूर्भुवः सुवरन्नं चन्द्रमसे दिग्भ्यः स्वाहा नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवः सुवरन्नमोम्॥

भूरग्नये पृथिव्यै स्वाहा भुवो वायवेऽन्तरिक्षाय स्वाहा सुवरादित्याय दिवे स्वाहा भूर्भुवः सुवश्चन्द्रमसे दिग्भ्यः स्वाहा नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवःसुवरग्न ओम् ॥

भूरग्नये च पृथिव्यै च महते च स्वाहा भुवो वायवे चान्तरिक्षाय च महते च स्वाहा सुवरादित्याय च दिवे च महते च स्वाहा भूर्भुवः सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवः सुवर्महरोम् ॥

पाहि नो अग्न एनसे स्वाहा ॥ पाहि नो विश्ववेदसे स्वाहा ॥ यज्ञं पाहि विभावसो स्वाहा ॥ सर्वं पाहि शतक्रतो स्वाहा ॥

पाहि नो अग्न एकया । पाह्युत द्वितीयया । पाह्यूर्जं तृतीयया । पाहि गीर्भिश्चतसृभिर्वसो स्वाहा ॥

यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्यश्छन्दास्याविवेश । सचाऽशिक्यः पुरोवाचोपनिषदिन्द्रो ज्येष्ठ इन्द्रियाय ऋषिभ्यो नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवः सुवश्छन्द ओम् ॥

नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं मा च्योढ्वं ममामुष्य ओम् ॥

ऋतं तपः सत्यं तपः श्रुतं तपः शान्तं तपो दमस्तपः शमस्तपो दानं तपो यज्ञं तपो भूर्भुवः सुवर्ब्रह्मैतदुपास्स्यैतत्तपः ॥

यथा वृक्षस्य सम्पुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति यथाऽसिधारां कर्तेऽवहितामवक्रामे यद्युवे युवे हवा विह्वयिष्यामि कर्तं पतिष्यामीत्येवममृतादात्मानं जुगुप्सेत् ॥

अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः । तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥ सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः समिधस्सप्त जिह्वाः । सप्त इमे लोका येषु चरन्ति प्राणा गुहाशयान्निहिताः सप्त सप्त ॥ अतः समुद्रा गिरयश्च सर्वेऽस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः । अतश्च विश्वा ओषधयो रसाच्च येनैष भूतस्तिष्ठत्यन्तरात्मा ॥ ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ सोमः पवित्रमत्येति रेभन् ॥ अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीꣳ सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥ हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ घृतं मिमिक्षिरे घृतमस्य योनिर्घृते श्रितो घृतमुवस्य धाम । अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ॥ समुद्रादूर्मिर्मधुमाꣳ उदारदुपाꣳशुना सममृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥ वयं नाम प्रब्रवामा घृतेनास्मिन् यज्ञे धारयामा नमोभिः । उप ब्रह्मा शृणवच्छस्यमानं चतुः शृङ्गोऽवमीद्गौर एतत् ॥ चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याꣳ आविवेश ॥ त्रिधा हितं पणिभिर्गुह्यमानं

गवि देवासो घृतमन्वविन्दन्। इन्द्र एकꣳ सूर्य एकं जजान वेनादेकꣳ स्वधया निष्टतक्षुः॥ यो देवानां प्रथमं पुरस्ताद्विश्वाधियो रुद्रो महर्षिः। हिरण्यगर्भं पश्यत जायमानꣳ स नो देवः शुभया स्मृत्या संयुनक्तु॥ यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्॥ न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः। परेण नाकं निहितं गुहायां बिभ्राजदेतद्यतयो विशन्ति॥ वेदान्तविज्ञानसुनिश्चितार्थाः सन्यासयोगाद्यतयः शुद्धसत्वाः। ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे॥ दह्रं विपापं परमेश्मभूतं यत्पुण्डरीकं पुरमध्यसꣳस्थम्। तत्रापि दह्रं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्॥ यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः परः स महेश्वरः॥ (अजोऽन्य आविवेश सर्वे चत्वारि च।)

सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम्। विश्वं नारायणं देवमक्षरं परमं पदम्॥ विश्वतः परमान्नित्यं विश्वं नारायणꣳ हरिम्। विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति॥ पतिं विश्वस्याऽऽत्मेश्वरꣳ शाश्वतꣳ शिवमच्युतम्। नारायणं महाज्ञेयं विश्वात्मानं परायणम्॥ नारायण परो ज्योतिरात्मा नारायणः परः। नारायण परं ब्रह्मतत्त्वं नारायणः परः। नारायण परोध्याता ध्यानं नारायणः परः॥ यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः॥ अनन्तमव्ययं कविꣳ समुद्रेऽन्तं विश्वशंभुवम्। पद्मकोशप्रतीकाशꣳ हृदयं चाप्यधोमुखम्॥ अधो

निष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति। ज्वालमालाकुलं भाती विश्वस्यायतनं महत्॥ सन्ततꣳ शिलाभिस्तु लम्बत्याकोशसन्निभम्। तस्यान्ते सुषिरꣳ सूक्ष्मं तस्मिन्त्सर्वं प्रतिष्ठितम्॥ तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः। सोऽग्रभुग्विभजन्तिष्ठन्नाहारमजरः कविः। तिर्यगूर्ध्वमधश्शायी रश्मयस्तस्य सन्तता॥ सन्तापयति स्वं देहमापादतलमस्तकः। तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः॥ नीलतोयदमध्यस्थाद्विद्युल्लेखेव भास्वरा। नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा॥ तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः। स ब्रह्म स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट्॥ (अपि वा सन्तता षट् च)

आदित्यो वा एष एतन्मण्डलं तपति तत्र ता ऋचस्तदृचा मण्डलꣳ स ऋचां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिर्दीप्यते तानि सामानि स साम्नां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिषि पुरुषस्तानि यजूꣳषि स यजुषा मण्डलꣳ स यजुषां लोकः सैषा त्रय्येव विद्या तपति य एषोऽन्तरादित्ये हिरण्मयः पुरुषः॥

आदित्यो वै तेज ओजो बलं यशश्चक्षुः श्रोत्रमात्मा मनो मन्युर्मनुर्मृत्युः सत्यो मित्रो वायुराकाशः प्राणो लोकपालः कः किं कं तत्सत्यमन्नममृतो जीवो विश्वः कतमः स्वयम्भु ब्रह्मैतदमृत एष पुरुष एष भूतानामधिपतिर्ब्रह्मणः सायुज्यꣳ सलोकतामाप्नोत्येतासामेव देवतानाꣳ सायुज्यꣳ सार्ष्टिताꣳ समानलोकतामाप्नोति य एवं वेदेत्युपनिषत्॥

निधनपतये नमः । निधनपतान्तिकाय नमः । ऊर्ध्वाय नमः । ऊर्ध्वलिङ्गाय नमः । हिरण्याय नमः । हिरण्यलिङ्गाय नमः । सुवर्णाय नमः । सुवर्णलिङ्गाय नमः । दिव्याय नमः । दिव्यलिङ्गाय नमः ॥ भवाय नमः । भवलिङ्गाय नमः । शर्वाय नमः । शर्वलिङ्गाय नमः । शिवाय नमः । शिवलिङ्गाय नमः । ज्वलाय नमः । ज्वललिङ्गाय नमः । आत्माय नमः । आत्मलिङ्गाय नमः । परमाय नमः । परमलिङ्गाय नमः । एतत्सोमस्य सूर्यस्य सर्वलिङ्गꣳ स्थापयति पाणिमन्त्रं पवित्रम् ॥

सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः । भवे भवे नातिभवे भवस्व माम् । भवोद्भवाय नमः ॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्व शर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥ नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमो नमः ॥

ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः ॥

सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु । पुरुषो वै रुद्रः सन्महो नमो

नमः। विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत्। सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥

कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे। वोचेम शन्तम हृदे। सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥

यस्य वैकङ्कत्यग्निहोत्रहवणी भवति प्रत्येवास्याऽऽहुतयस्तिष्ठन्त्यथो प्रतिष्ठित्यै ॥

कृष्णुष्वपाज इति पञ्च ॥

अदितिर्देवा गन्धर्वा मनुष्याः पितरोऽसुरास्तेषां सर्वभूतानां माता मेदिनी महता मही सावित्री गायत्री जगत्युर्वी पृथ्वी बहुला विश्वा भूता कतमा काया सा सत्येत्यमृतेति वसिष्ठः ॥

आपो वा इद सर्वं विश्वाभूतान्यापः प्राणा वा आपः पशव आपोऽन्नमापोऽमृतमापः सम्राडापो विराडापः स्वराडापश्छन्दा स्यापो ज्योती ष्यापो यजू ष्यापः सत्यमापः सर्वा देवता आपो भूर्भुवस्सुवराप ओम् ॥

आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम्। पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु माम्। यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम। सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रह स्वाहा ॥

अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः। पापेभ्यो रक्षन्ताम्।

यदह्ना पापमकार्षम्। मनसा वाचा हस्ताभ्याम्। पद्भ्यामुदरेण शिश्ना। अहस्तदवलुम्पतु। यत्किञ्च दुरितं मयि। इदमहं माममृतयोनौ। सत्ये ज्योतिषि जुहोमि स्वाहा॥

सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः। पापेभ्यो रक्षन्ताम्। यद्रात्रिया पापमकार्षम्। मनसा वाचा हस्ताभ्याम्। पद्भ्यामुदरेण शिश्ना। रात्रिस्तदवलुम्पतु। यत्किञ्च दुरितं मयि। इदमहं माममृतयोनौ। सूर्ये ज्योतिषि जुहोमि स्वाहा॥

ओमित्येकाक्षरं ब्रह्म। अग्निर्देवता ब्रह्म इत्यार्षम्। गायत्रं छन्दं परमात्मं सरूपम्। सायुज्यं विनियोगम्॥ आयातु वरदा देवी अक्षरं ब्रह्मसम्मितम्। गायत्री छन्दसां मातेदं ब्रह्म जुषस्व मे। यदह्नात्कुरुते पापं तदह्नात्प्रतिमुच्यते। यद्रात्रियात्कुरुते पापं तद्रात्रियात्प्रतिमुच्यते। सर्ववर्णे महादेवि सन्ध्याविद्ये सरस्वति॥

ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धामनामाऽसि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरों गायत्रीमावाहयामि सावित्री-मावाहयामि सरस्वतीमावाहयामि छन्दऋषीनावाहयामि श्रियमावाहयामि गायत्रिया गायत्री च्छन्दो विश्वामित्र ऋषिः सविता देवताऽग्निर्मुखं ब्रह्मा शिरो विष्णुर्हृदयꣳ रुद्रः शिखा पृथिवी योनिः प्राणापानव्यानोदानसमानासप्राणा-श्वेतवर्णासाङ्ख्यायनसगोत्रा गायत्री चतुर्विꣳशत्यक्षरा त्रिपदा षट्कुक्षिः पञ्चशीर्षोपनयने विनियोग ॐ भूः। ॐ भुवः। ओꣳ सुवः। ॐ महः। ॐ

जनः। ॐ तपः। ॐ सत्यम्। ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्॥ ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम्॥

उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि। ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि यथासुखम्॥ स्तुतो मया वरदा वेदमाता प्रचोदयन्ती पवने द्विजाता। आयुः पृथिव्यां द्रविणं ब्रह्मवर्चसं मह्यं दत्त्वा प्रजातुं ब्रह्मलोकम्॥ घृणिः सूर्य आदित्यो न प्रभावात्यक्षरम्। मधु क्षरन्ति तद्रसम्। सत्यं वै तद्रसमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम्॥

ब्रह्ममेतु माम्। मधुमेतु माम्। ब्रह्ममेव मधुमेतु माम्। यास्ते सोम प्रजा वत्सोभि सो अहम्। दुःष्वप्नहन्दुरुष्षह। यास्ते सोम प्राणाꣳस्ता-ञ्जुहोमि॥ त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात्। ब्रह्महत्यां वा एते घ्नन्ति। ये ब्राह्मणास्त्रिसुपर्णं पठन्ति। ते सोमं प्राप्नुवन्ति। आ सहस्रात्पङ्क्तिं पुनन्ति। ओम्॥

ब्रह्म मेधया। मधु मेधया। ब्रह्ममेव मधु मेधया। अद्या नो देव सवितः प्रजावत्सावीः सौभगम्। परा दुःष्वप्नियꣳ सुव। विश्वानि देवसवितर्दुरितानि परासुव। यद्भद्रं तन्म आसुव। मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः। मधु नक्तमुतोषसि मधुमत्पार्थिवꣳ रजः। मधु द्यौरस्तु नः पिता। मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः॥ य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात्। भ्रूणहत्यां वा एते

घ्नन्ति। ये ब्राँह्मणास्त्रिसुंपर्णं पठंन्ति। ते सोमं प्राप्नुंवन्ति। आ सहस्रात्पङ्क्तिं पुनंन्ति। ओम्॥

ब्रह्मं मेधवाँ। मधुं मेधवाँ। ब्रह्ममेव मधुं मेधवाँ। ब्रह्मा देवानाँ पदवीः कंवीनामृषिर्विप्राणां महिषो मृगाणाँम्। श्येनो गृध्राणा॑ स्वधितिर्वनांना॑ सोमः पवित्रमत्येति रेभंन्॥ हं॑सः शुंचिषद्वसुंरन्तरिक्षसद्धोतां वेदिषदतिंथिर्दुरोणसत्। नृषद्वंरसदृंतसद्व्योमसदब्जा गोजा ऋंतजा अंद्रिजा ऋतं बृहत्॥ ऋचे त्वां रुचे त्वा समित्स्रंवन्ति सरितो न धेनाः। अन्तर्हृदा मनंसा पूयमांनाः। घृतस्य धारां अभिचांकशीमि॥ हिरण्ययो वेतसो मध्यं आसाम्। तस्मिंन्त्सुपर्णो मंधुकृत्कुंलायी भजंन्नास्ते मधुं देवताभ्यः। तस्यांऽऽसते हरंयः सप्ततीरें स्वधां दुहांना अमृतंस्य धारांम्॥ य इदं त्रिसुंपर्णमयांचितं ब्राह्मणायं दद्यात्। वीरहत्यां वा एते घ्नन्ति। ये ब्राँह्मणास्त्रिसुंपर्णं पठंन्ति। ते सोमं प्राप्नुंवन्ति। आ सहस्रात्पङ्क्तिं पुनंन्ति। ओम्॥

**मेधासूक्तम्** - मेधा देवी जुषमांणा न आगाँद्विश्वाची भद्रा सुंमनस्यमांना। त्वया जुष्टां नुदमांना दुरुक्ताँन्बृहद्वंदेम विदथें सुवीराः॥ त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्माऽऽगतश्रीरुत त्वयाँ। त्वया जुष्टश्चित्रं विन्दते वसु सा नो जुषस्व द्रविंणो न मेधे॥

मेधां म इन्द्रो ददातु मेधां देवी सरंस्वती। मेधां मे अश्विनांवुभावाधंत्तां पुष्कंरस्रजा॥ अप्सरासुं च या मेधा गंन्धर्वेषुं च यन्मनंः। दैवीं मेधा

सरस्वती सा मां मेधा सुरभिर्जुषताꣳ स्वाहा ॥ आ मां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा जगती जगम्या । ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषन्ताम् ॥ मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्रं इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ॥

अपैतु मृत्युरमृतं न आगन्वैवस्वतो नो अभयं कृणोतु । पर्णं वनस्पतेरिवाभि नः शीयताꣳ रयिः सचतान्नः शचीपतिः ॥ परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाꣳ रीरिषो मोत वीरान् ॥ वातं प्राणं मनसाऽन्वारभामहे प्रजापतिं यो भुवनस्य गोपाः । स नो मृत्योस्त्रायतां पात्वꣳहसो ज्योग्जीवा जरामशीमहि ॥

अमुत्रभूयादध यद्यमस्य बृहस्पते अभिशस्तेरमुञ्चः । प्रत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः ॥

हरिꣳ हरन्तमनु यन्ति देवा विश्वस्येशानं वृषभं मतीनाम् । ब्रह्म सरूपमनु मेदमागादयनं मा विवधीर्विक्रमस्व ॥

शल्कैरग्निमिन्धान उभौ लोकौ सनेमहम् । उभयोर्लोकयोर् ऋध्वाऽतिमृत्युन्तराम्यहम् ॥

मा छिदो मृत्यो मा वधीर्मा मे बलं विवृहो मा प्रमोषीः । प्रजां मा मे रीरिष आयुरुग्र नृचक्षसं त्वा हविषा विधेम ॥

मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् । मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः ॥

मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीर् हविष्मन्तो नमसा विधेम ते ॥ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम् ॥ स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी । वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयङ्करः ॥ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥ ये ते सहस्रमयुतं पाशा मृत्यो मर्त्याय हन्तवे । तान् यज्ञस्य मायया सर्वानवयजामहे ॥ मृत्यवे स्वाहा मृत्यवे स्वाहा ॥

देवकृतस्यैनसोऽवयजनमसि स्वाहा । मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा । पितृकृतस्यैनसोऽवयजनमसि स्वाहा । आत्मकृतस्यैनसोऽवय-जनमसि स्वाहा । अन्यकृतस्यैनसोऽवयजनमसि स्वाहा । अस्मत्कृतस्यै-नसोऽवयजनमसि स्वाहा । यद्दिवा च नक्तं चैनश्चकृम तस्यावयजनमसि स्वाहा । यत्स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा । यत्सुषुप्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा । यद्विद्वाꣳसश्चा-विद्वाꣳसश्चैनश्चकृम तस्यावयजनमसि स्वाहा । एनस एनसोऽवयजनमसि स्वाहा ॥

यद्वो देवाश्चकृम जिह्वया गुरुमनसो वा प्रयुती देवहेडनम् । अरावा यो नो अभि दुच्छुनायते तस्मिन्तदेनो वसवो निधेतन स्वाहा ॥

कामोऽकार्षीन्नमो नमः। कामोऽकार्षीत्कामः करोति नाहं करोमि कामः कर्ता नाहं कर्ता कामः कारयिता नाहं कारयिता एष ते काम कामाय स्वाहा ॥ मन्युरकार्षीन्नमो नमः। मन्युरकार्षीन्मन्युः करोति नाहं करोमि मन्युः कर्ता नाहं कर्ता मन्युः कारयिता नाहं कारयिता एष ते मन्यो मन्यवे स्वाहा ॥

तिलाञ्जुहोमि सरसाᳪ सपिष्टान्गन्धार मम चित्ते रमन्तु स्वाहा ॥ गावो हिरण्यं धनमन्नपानᳪ सर्वेषाᳪ श्रियै स्वाहा ॥ श्रियं च लक्ष्मिं च पुष्टिं च कीर्तिं चाऽऽनृण्यताम्। ब्रह्मण्यं बहुपुत्रताम्। श्रद्धामेधे प्रजाः सन्ददातु स्वाहा ॥ तिलाः कृष्णास्तिलाः श्वेतास्तिलाः सौम्या वंशानुगाः। तिलाः पुनन्तु मे पापं यत्किञ्चिद्दुरितं मयि स्वाहा ॥ चोरस्यान्नं नवश्राद्धं ब्रह्महा गुरुतल्पगः। गोस्तेयᳪ सुरापानं भ्रूणहत्या तिला शान्तिᳪ शमयन्तु स्वाहा ॥ श्रीश्च लक्ष्मीश्च पुष्टीश्च कीर्तिं चाऽऽनृण्यताम्। ब्रह्मण्यं बहुपुत्रताम्। श्रद्धामेधे प्रज्ञा तु जातवेदः सन्ददातु स्वाहा ॥

प्राणापानव्यानोदानसमाना मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासᳪ स्वाहा। वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणरेतो बुद्ध्याकूतिःसङ्कल्पा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासᳪ स्वाहा। त्वक्चर्ममाᳪ सरुधिरमेदोमज्जास्नायवोऽस्थीनि मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासᳪ स्वाहा ॥ शिरः पाणिपादपार्श्वपृष्ठोरूदरजङ्घशिश्नोपस्थपायवो मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासᳪ स्वाहा ॥ उत्तिष्ठ पुरुष हरित

पिङ्गल लोहिताक्षि देहि देहि ददापयिता मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास॒ꣳस्वाहा ॥

पृथिव्यापस्तेजो वायुराकाशा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास॒ꣳ स्वाहा ॥ शब्दस्पर्शरूपरसगन्धा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास॒ꣳ स्वाहा ॥ मनोवाक्कायकर्माणि मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास॒ꣳस्वाहा ॥ अव्यक्तभावैरहङ्कारैर्ज्योतिरहं विरजा विपाप्मा भूयास॒ꣳ स्वाहा ॥ आत्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास॒ꣳ स्वाहा ॥ अन्तरात्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास॒ꣳस्वाहा ॥ परमात्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास॒ꣳ स्वाहा ॥ क्षुधे स्वाहा ॥ क्षुत्पिपासाय स्वाहा ॥ विविट्यै स्वाहा ॥ ऋग्विधानाय स्वाहा ॥ कषोत्काय स्वाहा ॥ क्षुत्पिपासामलं ज्येष्ठामलक्ष्मी-र्नाशयाम्यहम् । अभूतिमसमृद्धिं च सर्वान्निर्णुद मे पाप्मान॒ꣳ स्वाहा ॥ अन्नमयप्राणमयमनोमयविज्ञानमयमानन्दमयमात्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास॒ꣳ स्वाहा ॥

अग्नये स्वाहा । विश्वेभ्यो देवेभ्यः स्वाहा । ध्रुवाय भूमाय स्वाहा । ध्रुवक्षितये स्वाहा । अच्युतक्षितये स्वाहा । अग्नये स्विष्टकृते स्वाहा ॥ धर्माय स्वाहा । अधर्माय स्वाहा । अद्भ्यः स्वाहा । ओषधिवनस्पतिभ्यः स्वाहा । रक्षोदेवजनेभ्यः स्वाहा । गृह्याभ्यः स्वाहा । अवसानेभ्यः स्वाहा । अवसानपतिभ्यः स्वाहा । सर्वभूतेभ्यः स्वाहा । कामाय स्वाहा । अन्तरिक्षाय

स्वाहा॑। यदेज॑ति जग॑ति यच्च चेष्ट॑ति नाम्नो॑ भागोऽयं नाम्ने स्वाहा॑। पृथिव्यै स्वाहा॑। अन्तरि॑क्षाय स्वाहा॑। दिवे स्वाहा॑। सूर्या॑य स्वाहा॑। चन्द्रम॑से स्वाहा॑। नक्ष॑त्रेभ्यः स्वाहा॑। इन्द्रा॑य स्वाहा॑। बृहस्पत॑ये स्वाहा॑। प्रजाप॑तये स्वाहा॑। ब्रह्म॑णे स्वाहा॑। स्वधा पितृभ्यः स्वाहा॑। नमो॑ रुद्राय॑ पशुपत॑ये स्वाहा॑। देवेभ्यः स्वाहा॑। पितृभ्यः॑ स्वधाऽस्तु॑। भूतेभ्यो नमः॑। मनुष्ये॑भ्यो हन्ता॑। प्रजाप॑तये स्वाहा॑। परमेष्ठिने स्वाहा॑॥ यथा कूपः॑ शतधा॑रः सहस्र॑धारो अक्षि॑तः। एवा मे॑ अस्तु धान्य॒ सहस्र॑धारमक्षि॑तम्। धनं॑धान्यै स्वाहा॑॥ ये भूताः प्रचर॑न्ति दिवानक्तं बलि॑मिच्छन्तो॑ वितुद॑स्य प्रेष्याः॑। तेभ्यो॑ बलिं पुष्टि॑कामो॑ हरामि मयि पुष्टिं पुष्टि॑पतिर्द॑धातु स्वाहा॑॥ (ओषधिवनस्पतिभ्यः स्वाहाऽन्तरि॑क्षाय स्वाहा नमो॑ रुद्राय॑ पशुपत॑ये स्वाहा॑ वितुद॑स्य प्रेष्या एकं॑ च)

ओ॑ तद्ब्रह्म। ओ॑ तद्वायुः। ओ॑ तदात्मा। ओ॑ तत्सत्यम्। ओ॑ तत्सर्व॑म्। ओ॑ तत्पुरोर्नमः। अन्तश्चर॑ति भूतेषु गुहायां वि॑श्वमूर्तिषु। त्वं यज्ञस्त्वं वषट्कारस्त्वमिन्द्रस्त्व॒ रुद्रस्त्वं विष्णुस्त्वं ब्रह्म त्वं॑ प्रजापतिः। त्वं त॑दाप आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम्॥

श्रद्धाया॑ प्राणे निवि॑ष्टोऽमृत॑ जुहोमि। श्रद्धायांमपाने निवि॑ष्टोऽमृतं॑ जुहोमि। श्रद्धाया॑ व्याने निवि॑ष्टोऽमृत॑ जुहोमि। श्रद्धयांमुदाने निवि॑ष्टोऽमृतं॑ जुहोमि। श्रद्धायां॒ समाने निवि॑ष्टोऽमृतं॑ जुहोमि। ब्रह्म॑णि म आत्माऽमृ॑तत्वायं॥ अमृतोपस्तर॑णमसि॥ श्रद्धाया॑ प्राणे निवि॑ष्टोऽमृतं॑ जुहोमि। शिवो मा॑ विशाप्र॑दाहाय। प्राणाय स्वाहा॑। श्रद्धायांमपाने

निविंष्टोऽमृतं जुहोमि। शिवो मां विशाप्रंदाहाय। अपानाय स्वाहाँ। श्रद्धायाँ व्याने निविंष्टोऽमृतं जुहोमि। शिवो मां विशाप्रंदाहाय। व्यानाय स्वाहाँ। श्रद्धायांमुदाने निविंष्टोऽमृतं जुहोमि। शिवो मां विशाप्रंदाहाय। उदानाय स्वाहाँ। श्रद्धायां॰ समाने निविंष्टोऽमृतं जुहोमि। शिवो मां विशाप्रंदाहाय। समानाय स्वाहाँ। ब्रह्मंणि म आत्मामृंतत्वायं। अमृतापिधानमंसि॥

श्रद्धायाँ प्राणे निविंश्यामृतं॰ हुतम्। प्राणमन्नेंनाऽऽप्यायस्व। श्रद्धायांमपाने निविंश्यामृतं॰ हुतम्। अपानमन्नेंनाऽऽप्यायस्व। श्रद्धायाँ व्याने निविंश्यामृतं॰ हुतम्। व्यानमन्नेंनाऽऽप्यायस्व। श्रद्धायांमुदाने निविंश्यामृतं॰ हुतम्। उदानमन्नेंनाऽऽप्यायस्व। श्रद्धायां॰ समाने निविंश्यामृतं॰ हुतम्। समानमन्नेंनाऽऽप्यायस्व॥

अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं चं समाश्रितः। ईशः सर्वस्य जगतः प्रभु प्रीणातिं विश्वभुक्॥ वाङ्मं आसन्न्। नसोः प्राणः। अक्ष्योश्चक्षुः। कर्णयोः श्रोत्रंम्। बाहुवोर्बलंम्। ऊरुवोरोजः। अरिंष्टा विश्वान्यङ्गांनि तनूः। तनुवां मे सह नमंस्ते अस्तु मा मां हिं॰सीः॥ वयंः सुपर्णा उपंसेदुरिन्द्रं प्रियमेंधा ऋषंयो नाधंमानाः। अपंध्वान्तमूँर्णुहि पूर्धि चक्षुंर्मुमुग्ध्यंस्मान्नि-धयेंऽवबद्धान्॥

प्राणानां ग्रन्थिरसि रुद्रो मां विशान्तकः। ते नान्नेनाँऽऽप्यायस्व॥

नमो रुद्राय विष्णवे मृत्युंर्मे पाहि॥

त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वं वनेभ्य-स्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥

शिवेन मे सन्तिष्ठस्व स्योनेन मे सन्तिष्ठस्व सुभूतेन मे सन्तिष्ठस्व ब्रह्मवर्चसेन मे सन्तिष्ठस्व यज्ञस्यर्द्धिमनु सन्तिष्ठस्वोप ते यज्ञ नम उप ते नम उप ते नमः ॥

सत्यं परं परꣳ सत्यꣳ सत्येन न सुवर्गाल्लोकाच्च्यवन्ते कदाचन सताꣳ हि सत्यं तस्मात्सत्ये रमन्ते तप इति तपो नानशनात्परं यद्धि परं तपस्तद्दुर्धर्षं तद्दुराधर्षं तस्मात्तपसि रमन्ते दम इति नियतं ब्रह्मचारिणस्तस्माद्दमे रमन्ते शम इत्यरण्ये मुनयस्तस्माच्छमे रमन्ते दानमिति सर्वाणि भूतानि प्रशꣳसन्ति दानान्नातिदुश्चरं तस्माद्दाने रमन्ते धर्म इति धर्मेण सर्वमिदं परिगृहीतं धर्मान्नातिदुष्करं तस्माद्धर्मे रमन्ते प्रजन इति भूयाꣳसस्तस्माद्भूयिष्ठाः प्रजायन्ते तस्माद्भूयिष्ठाः प्रजनने रमन्तेऽग्नय इत्याह तस्मादग्नय आधातव्या अग्निहोत्रमित्याह तस्मादग्निहोत्रे रमन्ते यज्ञ इति यज्ञो हि देवास्तस्माद्यज्ञे रमन्ते मानसमिति विद्वाꣳसस्तस्माद्विद्वाꣳस एव मानसे रमन्ते न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा तानि वा एतान्यवराणि पराꣳसि न्यास एवात्यरेचयद्य एवं वेदेत्युपनिषत् ॥

प्राजापत्यो हाऽऽरुणिः सुपर्णेयः प्रजापतिं पितरमुपससार किं भगवन्तः परमं वदन्तीति तस्मै प्रोवाच सत्येन वायुरावाति सत्येनाऽऽदित्यो रोचते दिवि सत्यं वाचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठितं तस्मात्सत्यं परमं वदन्ति तपसा

देवा देवतामग्रं आयन्तपसरषयः सुवरन्वंविन्दन्तपंसा सपत्नान्प्रणुदामारांती-
स्तपंसि सर्वं प्रतिष्ठितं तस्मात्तपः परमं वदन्ति दमेन दान्ताः
किल्बिषंमवधून्वन्ति दमेन ब्रह्मचारिणः सुवंरगच्छन्दमो भूतानां दुराधर्षं दमे
सर्वं प्रतिष्ठितं तस्माद्दमः परमं वदन्ति शमेन शान्ताः शिवमाचरन्ति शमेन
नाकं मुनयोऽन्वविन्दञ्छमो भूतानां दुराधर्षञ्छमे सर्वं प्रतिष्ठितं तस्माच्छमः
परमं वदन्ति दानं यज्ञानां वरूथं दक्षिणा लोके दातारं॑ सर्वभूतान्युंपजीवन्ति
दानेनारातीरपानुदन्त दानेनं द्विषन्तो मित्रा भंवन्ति दाने सर्वं प्रतिष्ठितं
तस्माद्दानं परमं वदन्ति धर्मो विश्वस्य जगंतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा
उपसर्पन्ति धर्मेणं पापमंपनुदति धर्मे सर्वं प्रतिष्ठितं त्समाद्धर्मं परमं वदन्ति
प्रजननं वै प्रतिष्ठा लोके साधु प्रजायास्तन्तुं तन्वानः पितृणामंनृणो भवंति
तदेव तस्या अनृणं तस्मात्प्रजननं परमं वदन्त्यग्नयो वै त्रयी विद्या देवयानः
पन्थां गार्हपत्य ऋक्पृथिवी रथन्तरमन्वाहार्यपचनं यजुरन्तरिंक्षं वामदेव्य-
मांहवनीयः सामं सुवर्गो लोको बृहत्तस्मादग्नीन्परमं वदन्त्यग्निहोत्रं॑ सायं
प्रातर्गृहाणां निष्कृतिः स्विष्टं॑ सुहुतं यंज्ञक्रतूनां प्रायणं॑ सुवर्गस्य लोकस्य
ज्योतिस्तस्मादग्निहोत्रं परमं वदन्ति यज्ञ इति यज्ञेन हि देवा दिवं गता
यज्ञेनासुरानपानुदन्त यज्ञेनं द्विषन्तो मित्रा भवन्ति यज्ञे सर्वं प्रतिष्ठितं
तस्माद्यज्ञं परमं वदन्ति मानसं वै प्राजापत्यं पवित्रं मानसेन मनसा साधु
पश्यति मानसा ऋषयः प्रजा असृजन्त मानसे सर्वं प्रतिष्ठितं तस्मान्मानसं
परमं वदन्ति न्यास इत्याहुर्मनीषिणो ब्रह्माणं ब्रह्मा विश्वः कतमः स्वयम्भु-
प्रजापंतिः संवत्सर इति संवत्सरोऽसावादित्यो य एष आदित्ये पुरुषः स

परमेष्ठी ब्रह्माऽऽत्मा याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति पर्जन्येनौषधिवनस्पतयः प्रजायन्त ओषधिवनस्पतिभिरन्नं भवत्यन्नेन प्राणाः प्राणैर्बलं बलेन तपस्तपसा श्रद्धा श्रद्धया मेधा मेधया मनीषा मनीषया मनो मनसा शान्तिः शान्त्या चित्तं चित्तेन स्मृतिꣳ स्मृत्या स्मारꣳ स्मारेण विज्ञानं विज्ञानेनाऽऽत्मानं वेदयति तस्मादन्नं ददन्त्सर्वाण्येतानि ददात्यन्नात्प्राणा भवन्ति भूतानां प्राणैर्मनो मनसश्च विज्ञानं विज्ञानादानन्दो ब्रह्म योनिः स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं च द्यौश्च दिशश्चावान्तरदिशाश्च स वै सर्वमिदं जगत्स स भूतꣳ स भव्यं जिज्ञासक्लृप्त ऋतजा रयिष्ठा श्रद्धा सत्यो महस्वान्तपसो वरिष्ठाज्ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाहि विद्वान्तस्मान्न्यासमेषां तपसामतिरिक्तमाहुर्वसुरण्वो विभूरसि प्राणे त्वमसि सन्धाता ब्रह्मन्त्वमसि विश्वधृत्तेजोदास्त्वमस्यग्निरसि वर्चोदास्त्वमसि सूर्यस्य द्युम्नोदास्त्वमसि चन्द्रमस उपयामगृहीतोऽसि ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीतैतद्वै महोपनिषदं देवानां गुह्यं य एवं वेद ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमित्युपनिषत् ॥

तस्यैवं विदुषो यज्ञस्याऽऽत्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीद्यावद्ध्रियते सा दीक्षा यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्सञ्चरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखं

तदाहवनीयो या व्याहृतिराहुतिर्यदस्य विज्ञानं तज्जुहोति यत्सायं प्रातरत्ति तत्समिधं यत्प्रातर्मध्यन्दिनꣳ सायं च तानि सवनानि ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि य ऋतवस्ते पशुबन्धा ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणाः सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथ एतद्वै जरामर्यमग्निहोत्रꣳ सत्रं य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वाऽऽदित्यस्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यꣳ सलोकतामाप्नोत्येतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति तस्माद्ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानम् ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ॥

# लघुनारायणोपनिषत्

ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै। ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ अथ पुरुषो ह वै नारायणोऽकामयत प्रजास्सृजेयेति । नारायणात्प्राणो जायते । मनस्सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापःपृथिवी विश्वस्य धारिणी । नारायणाद्ब्रह्मा जायते । नारायणाद्रुद्रो जायते । नारायणादिन्द्रो जायते । नारायणात्प्रजापतयः प्रजायन्ते । नारायणाद्द्वादशादित्या रुद्रा वसवस्सर्वाणि च छंदाꣳसि । नारायणादेव समुत्पद्यन्ते । नारायणे प्रवर्तन्ते । नारायणे प्रलीयन्ते ॥

ओम् । अथ नित्यो नारायणः । ब्रह्मा नारायणः । शिवश्च नारायणः । शक्रश्च नारायणः । द्यावापृथिव्यौ च नारायणः । कालश्च नारायणः । दिशश्च नारायणः । ऊर्ध्वश्च नारायणः । अधश्च नारायणः । अन्तर्बहिश्च नारायणः । नारायण एवेदꣳ सर्वम् । यद्भूतं यच्च भव्यम् । निष्कलो निरञ्जनो निर्विकल्पो निराख्यातश्शुद्धो देव एको नारायणः । न द्वितीयोऽस्ति कश्चित् । य एवं वेद । स विष्णुरेव भवति स विष्णुरेव भवति । ओमित्यग्रे व्याहरेत् । नम इति पश्चात् । नारायणायेत्युपरिष्टात् । ओमित्येकाक्षरम् । नम इति द्वे अक्षरे । नारायणायेति पञ्चाक्षराणि । एतद्वै नारायणस्याष्टाक्षरं पदम् । यो ह वै नारायणस्याष्टाक्षरं पदमध्येति । अनपब्रवः सर्वमायुरेति । विन्दते प्राजा-

पत्य॑ꣳरायस्पोषं गौप॒त्यम् । ततोऽमृतत्वमश्नुते ततोऽमृतत्वमश्नुत इति । य एवं वेद ॥

प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्वरूपम् । अकार उकार मकार इति । तानेकधा समभरत्तदेतदोमिति । यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात् । ओन्नमो नारायणायेति मन्त्रोपासकः । वैकुण्ठभुवनलोकं गमिष्यति । तदिदं परं पुण्डरीकं विज्ञानघनम् । तस्मात्तदिदावन्मात्रम् । ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनोम् । सर्वभूतस्थमेकं नारायणम् । कारणरूपमकार-परब्रह्मोम् ॥

एतदथर्वशिरो योऽधीते । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायमधीयानो दिवसकृतं पापं नाशयति । माध्यन्दिनमादित्याभिमुखोऽ-धीयानः पञ्चपातकोपपातकात्प्रमुच्यते । सर्ववेदपारायणपुण्यं लभते । नारायणसायुज्यमवाप्नोति । नारायणसायुज्यमवाप्नोति । य एवं वेद । इत्युपनिषत् ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ॥



# सहवैप्रश्नः

ॐ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ सह वै देवानां चासुराणां च यज्ञौ प्रततावास्तां वयꣳस्वर्गं लोकमेष्यामो वयमेष्याम इति तेऽसुराः सन्नह्य सहसैवाचरन्ब्रह्मचर्येण तपसैव देवास्तेऽसुरा अमुह्यꣳस्ते न प्राजानꣳस्ते पराभवन्ते न स्वर्गं लोकं मायन्प्रसृतेन वै यज्ञेन देवाः स्वर्गं लोकमायन्नप्रसृतेनासुरान्पराऽभावयन्प्रसृतो ह वै यज्ञोपवीतिनो यज्ञोऽप्रसृतोऽनुपवीतिनो यत्किञ्च ब्राह्मणो यज्ञोपवीत्यधीते यजत एव तत्तस्माद्यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा यज्ञस्य प्रसृत्या अजिनं वासो वा दक्षिणत उपवीय दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतमेतदेव विपरीतं प्राचीनावीतꣳ संवीतं मानुषम् ॥

रक्षाꣳसि ह वा पुरोनुवाके तपोग्रमतिष्ठन्त तान्प्रजापतिर्वरेणोपामन्त्रयत तानि वरमवृणीताऽऽदित्यो नो योद्धा इति तान्प्रजापतिरब्रवीद्योधयध्वमिति तस्मादुत्तिष्ठन्तꣳ ह वा तानि रक्षाꣳस्यादित्यं योधयन्ति यावदस्तमन्व-गात्तानि ह वा एतानि रक्षाꣳसि गायत्रियाऽभिमन्त्रितेनाम्भसा शाम्यन्ति तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः सन्ध्यायां गायत्रियाऽभिमन्त्रिता आप ऊर्ध्वं विक्षिपन्ति ता एता आपो वज्रीभूत्वा तानि रक्षाꣳसि मन्देहारुणे द्वीपे प्रक्षिपन्ति यत्प्रदक्षिणं प्रक्रमन्ति तेन पाप्मानमवधून्वन्त्युद्यन्तमस्तं

यन्तंमादित्यमंभिध्यायन्कुर्वन्ब्राँह्मणो विद्वान्त्सकलं भद्रमंश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन्ब्रह्माप्येति य एवं वेदं ॥

**कूश्माण्डहवनोपयोगिमन्त्राः** - यद्देवा देवहेळनं देवांसश्चकृमा वयम् । आदित्यास्तस्माँन्मा मुञ्चतर्तस्यर्तेन मामित ॥ देवां जीवनकाम्या यद्वाचाऽनृंतमूदिम । तस्माँन्न इह मुंञ्चत विश्वें देवाः सजोषंसः ॥ ऋतेनं द्यावापृथिवी ऋतेन त्वᳵ संरस्वति । कृतान्नंः पाह्येनंसो यत्किञ्चानृंतमूदिम ॥ इन्द्राग्नी मित्रावरुंणौ सोमों धाता बृहस्पतिंः । ते नों मुञ्चन्त्वेनंसो यदन्यकृंतमारिम ॥ सजातशᳵसादुत जांमिशᳵसाज्ज्यायंसः शᳵसांदुत वा कनीयसः । अनांधृष्टं देवकृंतं यदेनस्तस्मात्त्वमस्माञ्जांतवेदो मुमुग्धि ॥ यद्वाचा यन्मनंसा बाहुभ्यांमूरुभ्यांमष्ठीवद्भ्यांᳵ शिश्नैर्यदनृंतं चकृमा वयम् । अग्निर्मा तस्मादेनंसः प्रमुंञ्चतु चकृम यानिं दुष्कृता ॥ येनं त्रितो अंर्णवान्निर्बभूव येन सूर्यं तमंसो निर्मुमोचं । येनेन्द्रो विश्वा अजंहादरांतीस्तेनाहं ज्योतिंषा ज्योतिरानशान आँक्षि ॥ यत्कुसींदमप्रंतीत्तं मयेह येनं यमस्यं निधिना चरांमि । एतत्तदंग्ने अनृणो भंवामि जीवंन्नेव प्रति तत्तें दधामि ॥ यन्मयिं माता गर्भे सत्येनंश्चकार यत्पिता । अग्निर्मा तस्मादेनंसो गार्हंपत्यः प्रमुंञ्चतु दुरिता यानिं चकृम करोतु मामंनेनसंम् ॥ यदां पिपेषं मातरं पितरं पुत्रः प्रमुंदितो धयंन्न् । अहिंᳵसितौ पितरौ मया तत्तदंग्ने अनृणो भंवामि ॥ यदन्तरिंक्षं पृथिवीमुतद्यां यन्मातरं पितरं वा जिहिंᳵसिम । अग्निर्मा तस्मादेनंसो गार्हंपत्यः प्रमुंञ्चतु दुरिता यानिं चकृम करोतु मामंनेनसंम् ॥ यदाशसां निशसा यत्पंराशासा यदेनंश्चकृमा नूतंनं

यत्पुराणम् । अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेनसम् ॥ अतिक्रामामि दुरितं यदेनो जहामि रिप्रं परमे सधस्थे । यत्र यन्ति सुकृतो नापि दुष्कृतस्तमारोहामि सुकृतान्नु लोकम् ॥ त्रिते देवा अमृजतैतदेनस्त्रित एतन्मनुष्येषु मा मृजे । ततो मा यदि किञ्चिदानशेऽग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेनसम् ॥ दिवि जाता अप्सु जाता या जाता ओषधीभ्यः । अथो या अग्निजा आपस्ता नः शुन्धन्तु शुन्धनीः ॥ यदापो नक्तं दुरितं चराम यद्वा दिवा नूतनं यत्पुराणम् । हिरण्यवर्णास्तत उत्पुनीतनः ॥ इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युराचके ॥ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेळमानो वरुणेह बोध्युरुश९ँस मा न आयुः प्रमोषीः ॥ त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेळोऽवयासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषा९ँसि प्र मुमुग्ध्यस्मत् ॥ स त्वं नो अग्ने वमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अव यक्ष्व नो वरुण९ँ रराणो वीहि मृळीक९ँ सुहवो न एधि ॥ त्वमग्ने अयास्ययासन्मनसा हितः । अया सन् हव्यमूहिषेऽया नो धेहि भेषजम् ॥ यददीव्यं नृणमहं बभूवादित्सन्वासजगर जनेभ्यः । अग्निर्मा तस्मा दिन्द्रश्च संविदानौ प्रमुञ्चताम् ॥ यद्धस्ताभ्यां चकर किल्बिषाण्यक्षाणां वग्नुमुपजिघ्नमानः । उग्रंपश्या च राष्ट्रभृच्च तान्यप्सरसावनु-दत्तामृणानि ॥ उग्रंपश्ये राष्ट्रभृत्किल्बिषाणि यदक्षवृत्तमनुदत्तमेतत् । नेन्न ऋणानृणव इत्समानो यमस्य लोके अधिरज्जुराय ॥ अव ते हेळो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः । क्षयन्नस्मभ्यमसुर प्रचेतो राजन्नेना९ँसि

शिश्रथः कृतानि ॥ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमꣳश्रथाय । अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युराचके ॥ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेळमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्रमोषीः ॥ त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेळोऽवयासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्र मुमुग्ध्यस्मत् ॥ स त्वं नो अग्ने वमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अव यक्ष्व नो वरुणꣳ रराणो वीहि मृळीकꣳ सुहवो न एधि ॥ सङ्कुसुको विकुसुको निरृथो यश्च निस्वनः । तेऽस्मद्यक्ष्ममनागसो दूराद्दूरमचीचतम् ॥ निर्यक्ष्ममचीचते कृत्यां निरृतिं च । तेन योऽस्मत्समृच्छातै तमस्मै प्रसुवामसि ॥ दुःशꣳसानुशꣳसाभ्यां घणेनानुघणेन च । तेनान्योऽस्मत्समृच्छातै तमस्मै प्रसुवामसि ॥ संवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन । त्वष्टा नो अत्र विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् ॥ कृत्यां निरृतिं च पञ्च च ॥

आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः । पुनस्ते प्राण आयाति परा यक्ष्मꣳ सुवामि ते ॥ आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभि रक्षतादिमम् ॥ इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण सꣳशिशाधि । मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासत् ॥ अग्न आयूꣳषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥ अग्ने पवस्व स्वपा अस्मे वर्चस्सुवीर्यम् । दधद्रयिं मयि पोषम् ॥ अग्निरृषिः पवमानः पाञ्चजन्यः

पुरोहितः। तमीमहे महागयम्॥ अग्ने जातान्प्रणुदा नः सपत्नान्प्रत्यजाता-आतवेदो नुदस्व। अस्मे दीदिहि सुमना अहेळञ्छर्मन्ते स्याम त्रिवरूथ उद्भौ॥ सहसा जातान्प्रणुदा नः सपत्नान्प्रत्यजाताञातवेदो नुदस्व। अधि नो ब्रूहि सुमनस्यमानो वयꣳ स्याम प्रणुदानः सपत्नान्॥ अग्ने यो नोऽभितो जनो वृको वारो जिघांꣳसति। ताꣳस्त्वं वृत्रहञ्जहि वस्वस्मभ्यमाभर॥ अग्ने यो नोऽभिदासति समानो यश्च निष्ट्यः। तं वयꣳ समिधं कृत्वा तुभ्यमग्नेऽपि दध्मसि॥ यो नः शपादशपतो यश्च नः शपतः शपात्। उषाश्च तस्मै निम्रुक्च सर्वं पापꣳ समूहताम्॥ यो नः सपत्नो यो रणो मर्तोऽभिदासति देवाः। इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किञ्चन॥ यो मां द्वेष्टि जातवेदो यं चाहं द्वेष्मि यश्च माम्। सर्वाꣳ स्तानग्ने सन्दह याꣳश्चाहं द्वेष्मि ये च माम्॥ यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः। निन्दाद्यो अस्मान्दिप्साच्च सर्वाꣳ-स्तान्मष्मषाकुरु॥ सꣳशितं मे ब्रह्म सꣳशितं वीर्यं२बलम्। सꣳशितं क्षत्त्रं मे जिष्णु यस्याहमस्मि पुरोहितः॥ उदेषां बाहू अतिरमुद्वर्चो अथो बलम्। क्षिणोमि ब्रह्मणा मित्रानुन्नयामि स्वां२अहम्॥ पुनर्मनः पुनरायुर्म आगात्पुनश्चक्षुः पुनः श्रोत्रं म आगात्पुनः प्राणः पुनराकूतं म आगात्पुनश्चित्तं पुनराधीतं म आगात्। वैश्वानरो मेऽदब्धस्तनूपा अवबाधतां दुरितानि विश्वा॥ पोषं दध्मसि पुरो हितश्चत्वारि च॥

अग्नेऽभ्यावर्तिन्नभि न आवर्तस्वाऽऽयुषा वर्चसा सन्या मेधया प्रजया धनेन॥ अग्ने अङ्गिरः शतं ते सन्त्वावृतः सहस्रं त उपावृतः। तासां पोषस्य पोषेण पुनर्नो नष्टमाकृधि पुनर्नो रयिमाकृधि॥ पुनरूर्जा निवर्तस्व पुनरग्न

इषायुंषा। पुनर्नः पाहि विश्वतः॥ सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया। विश्वप्स्निया विश्वतस्परि॥

वैश्वानराय प्रतिवेदयामो यदीनृण॰ संङ्गरो देवतासु। स एतान्पाशान्प्रमुचन्प्रवेद स नो मुञ्चातु दुरितादवद्यात्॥ वैश्वानरः पवयान्नः पवित्रैर्यत्सङ्गरमभिधावाम्याशाम्। अनाजानन्मनसा याचमानो यदत्रैनो अव तत्सुवामि॥ अमी ये सुभगे दिवि विचृतौ नाम तारके। प्रेहामृतस्य यच्छतामेतद्बद्धकमोचनम्॥ विजिहीर्ष्व लोकान्कृधि बन्धान्मुञ्चासि बद्धकम्। योनेरिव प्रच्युतो गर्भः सर्वान्पथो अनुष्व॥ स प्रजानन्प्रतिगृभ्णीत विद्वान्प्रजापतिः प्रथमजा ऋतस्य। अस्माभिर्दत्तं जरसः परस्तादच्छिन्नं तन्तुमनुसञ्चरेम॥ ततं तन्तुमन्वेके अनुसञ्चरन्ति येषां दत्तं पित्र्यमायनवत्। अबन्ध्वेके ददतः प्रयच्छाद्दातुं चेच्छक्नुवा॰सः स्वर्ग एषाम्। आरभेथामनु स॰रभेथा॰ समानं पन्थामवथो घृतेन। यद्वां पूर्तं परिविष्टं यदग्नौ तस्मै गोत्रायेह जायापती स॰रभेथाम्॥ यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहि॰सिम। अग्निर्मा तस्मादेनसो गार्हपत्य उन्नो नेषदुरिता यानि चकृम॥ भूमिर्माताऽदितिर्नो जनित्रं भ्राताऽन्तरिक्षमभिशस्त्या एनः। द्यौर्नः पिता पितृयाच्छं भवासि जामि मित्वा मा विवित्सि लोकात्॥ यत्र सुहार्दः सुकृतो मदन्ते विहाय रोगं तन्वा२॰ स्वायाम्। अश्लोणाङ्गैरहुताः स्वर्गे तत्र पश्येम पितरं च पुत्रम्॥ यदन्नमद्म्यनृतेन देवा दास्यन्नदास्यन्नुत वा करिष्यन्। यद्देवानां चक्षुष्यागो अस्ति यदेव किञ्च प्रतिजग्राहमग्निर्मा तस्मादनृणं कृणोतु॥ यदन्नमद्मि बहुधा विरूपं वासो हिरण्यमुत

गामजामविंम् । यद्देवानां चक्षुष्यागो अस्ति यदेव किञ्च प्रतिजग्राहमग्निर्मातस्मांदनृणं कृंणोतु । यन्मयां मनंसा वाचा कृतमेनंः कदाचन । सर्वस्मांत्तस्मांन्मेळिंतो मोग्धि त्वꣳहि वेत्थं यथातथम् ॥ चरेम पुत्रꣳ षट् चं ॥

वातंरशना ह वा ऋषंयश्श्रमणा ऊर्ध्वमंन्थिनो बंभूवुस्तानृषंयोऽर्थ-मांयꣳस्ते निलायंमचरꣳस्तेऽनुंप्रविशुः कूश्माण्डानि ताꣳस्तेष्वन्वं-विन्दञ्छ्रद्धयां च तपंसा च तानृषंयोऽब्रुवन्कथा निलायं चरथेति त ऋषींनब्रुवन्नमों वोऽस्तु भगवन्तोऽस्मिन्धांम्नि केनं वस्सपर्यमिति तानृषंयोऽब्रुवन्पवित्रं नो ब्रूत येनांरेपसंस्स्यामेति त एतानिं सूक्तान्यंपश्यन् यद्देवा देवहेळंनं यददींव्यन्नृणमहं बभूवायुंष्टे विश्वतों दधदित्येतैराज्यं जुहुत वैश्वानराय प्रतिंवेदयाम इत्युंपतिष्ठत यदंर्वाचीनमेनों भ्रूणहत्यायास्तस्मां-न्मोक्ष्यध्व इति त एतैरंजुहवुस्तेऽरेपसोंऽभवन्कर्मादिष्वेतैर्जुंहुयात्पूतो देंव-लोकान्थ्समंश्नुते ॥

कूश्माण्डैर्जुंहुयाद्योऽपूंत इव मन्येंत यथां स्तेनो यथां भ्रूणहैवमेष भंवति योऽयोनौ रेतंस्सिञ्चति यदंर्वाचीनमेनों भ्रूणहत्यायास्तस्मांन्मुच्यते यावदेनों दीक्षामुपैंति दीक्षित एतैस्संतति जुंहोति संवथ्सरं दींक्षितो भंवति संवथ्सरादेवात्मानं पुनीते मासं दीक्षितो भंवति यो मासस्स संवथ्स-रस्संवथ्सरादेवात्मानं पुनीते चतुंर्विꣳशतिꣳ रात्रींर्दीक्षितो भंवति चतुंर्विꣳ-शतिरर्धमासास्संवथ्सरस्संवथ्सरादेवात्मानं पुनीते द्वादंश रात्रींर्दीक्षितो भंवति

द्वादश मासाँस्संवत्सरस्संवत्सरादेवात्मानं पुनीते षड्रात्रीर्दीक्षितो भवति षड्वा
ऋतवस्संवथ्सरस्संवथ्सरादेवात्मानं पुनीते तिस्रो रात्रीर्दीक्षितो भवति त्रिपदा
गायत्री गायत्रिया एवात्मानं पुनीते न माꣳसमश्नीयान्न स्त्रियमुपेया-
न्नोपर्यासीत जुगुप्सेतानृतात्पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्यामिक्षा
वैश्यस्याथो सौम्येऽप्यध्वर एतद्व्रतं ब्रूयाद्यदि मन्येतोपदस्यामीत्योदनं
धानास्सक्तून्घृतमित्यनुव्रतयेदात्मनोऽनुपदासाय ॥

अजान् ह वै पृश्नीꣳस्तपस्यमानान्ब्रह्म स्वयम्भ्वभ्यानर्षत्त
ऋषयोऽभवन्तदृषीणामृषित्वं तां देवतामुपातिष्ठन्त यज्ञकामास्त एतं
ब्रह्मयज्ञमपश्यन्तमाहरन्तेनायजन्त यदृचोऽध्यगीषत ताः पयआहुतयो
देवानामभवन् यद्यजूꣳषि घृताहुतयो यत्सामानि सोमाहुतयो यदथर्वाङ्गिरसो
मध्वाहुतयो यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथा नाराशꣳ
सीर्मेदाहुतयो देवानामभवन्ताभिः क्षुधं पाप्मानमपाघ्नन्नपहतपाप्मानो देवा-
स्स्वर्गं लोकमायन्ब्रह्मणस्सायुज्यमृषयोऽगच्छन् ॥

पञ्च वा एते महायज्ञास्संतति प्रतायन्ते सतति संतिष्ठन्ते देवयज्ञः
पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति यदग्नौ जुहोत्यपि समिधं
तद्देवयज्ञस्संतिष्ठते यत्पितृभ्यस्स्वधा करोत्यप्यपस्तत्पितृयज्ञस्संतिष्ठते यद्भू-
तेभ्यो बलिꣳ हरति तद्भूतयज्ञस्संतिष्ठते यद्ब्राह्मणेभ्योऽन्नं ददाति
तन्मनुष्ययज्ञस्संतिष्ठते यत्स्वाध्यायमधीयीतैकामप्यृचं यजुस्साम वा
तद्ब्रह्मयज्ञस्संतिष्ठते यदृचोऽधीते पयसः कूल्या अस्य पितृन्थ्स्वधा अभि

वंहन्ति यद्यजूं९षि घृतस्यं कूल्या यत्सामांनि सोमं एभ्यः पवते यदथर्वाङ्गिरसो मधौः कूल्या यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथां नाराश९सीर्मेदसः कूल्यां अस्य पितृन्थ्स्वधा अभि वंहन्ति यदृचोऽधीते पयंआहुतिभिरेव तद्देवा९स्तर्पयति यद्यजूं९षि घृताहुंतिभिर्यत्सामांनि सोमांहुतिभिर्यदथर्वाङ्गिरसो मध्वांहुतिभिर्यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथां नाराश९सीर्मेदाहुतिभिरेव तद्देवा९स्तर्पयति त एनं तृप्ता आयुंषा तेजंसा वर्चसा श्रिया यशंसा ब्रह्मवर्चसेनान्नाद्येन च तर्पयन्ति ॥

ब्रह्मयज्ञेनं यक्ष्यमाणः प्राच्यां दिशि ग्रामादच्छंदिर्दृश उदीच्यां प्रागुदीच्यां वोदितं आदित्ये दक्षिणत उपवीयोंपविश्य हस्तांववनिज्य त्रिराचांमेद्द्विः परिमृज्यं सकृदुंपस्पृश्य शिरश्चक्षुंषी नासिंके श्रोत्रे हृदंयमालभ्य यत्त्रिराचामंति तेन ऋचः प्रीणाति यद्द्विः परिमृजंति तेन यजूं९षि यत्सकृदुंपस्पृशंति तेन सामांनि यत्सव्यं पाणिं पादौ प्रोक्षति यच्छिरश्चक्षुंषी नासिंके श्रोत्रे हृदंयमालभंते तेनाथर्वाङ्गिरसौं ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथां नाराश९सीः प्रीणाति दर्भाणां महदुंपस्तीर्योपस्थं कृत्वा प्राङासीनस्स्वाध्यायमधीयीतापां वा एष ओषंधीना९ रसो यद्दर्भास्सरसमेव ब्रह्मं कुरुते दक्षिणोत्तरौ पाणी पादौ कृत्वा सपवित्रावोमिति प्रतिपद्यत एतद्वै यजुंस्त्रयीं विद्यां प्रत्येषा वागेतत्परममक्षरं तदेतदृचाऽभ्युक्तमृचो अक्षरे परमे व्योंमन् यस्मिन्देवा अधि विश्वे निषेदुर्यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासत इति त्रीनेव प्रायुंङ्क्त भूर्भुवस्स्वरित्याहैतद्वै वाचस्सत्यं यदेव वाचस्सत्यं तत्प्रायुङ्क्ताथं सावित्रीं गायत्रीं त्रिरन्वाह पच्छोऽर्धर्च-

शोऽनवानꣳ संविता श्रियः प्रसविता श्रियमेवाप्नोत्यथो प्रज्ञातयैव प्रतिपदा छन्दांꣳसि प्रतिपद्यते ॥

ग्रामे मनसा स्वाध्यायमधीयीत दिवा नक्तं वेति ह स्माह शौच आह्नेय उतारण्येऽबलं उत वाचोत तिष्ठन्नुत व्रजन्नुतासीन उत शयानोऽधीयीतैव स्वाध्यायं तपस्वी पुण्यो भवति य एवं विद्वान्स्वाध्यायमधीते नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोति ॥

मध्यन्दिने प्रबलमधीयीतासौ खलु वावैष आदित्यो यद्ब्राह्मणस्त-स्मात्तर्हि तेक्ष्णिष्ठं तपति तदेषाऽभ्युक्ता । चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आऽप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्चेति स वा एष यज्ञस्सद्यः प्रतायते सद्यस्संतिष्ठते तस्य प्राक्सायमवभृथो नमो ब्रह्मण इति परिधानीयां त्रिरन्वाहाप उपस्पृश्य गृहानेति ततो यत्किंच ददाति सा दक्षिणा ॥

तस्य वा एतस्य यज्ञस्य मेघो हविर्धानं विद्युदग्निर्वर्षꣳ हविस्स्तनयित्नुर्वषट्कारो यदवस्फूर्जति सोऽनुवषट्कारो वायुरात्माऽमावास्या स्विष्टकृद्य एवं विद्वान्मेघे वर्षति विद्योतमाने स्तनयत्यवस्फूर्जति पवमाने वायावमावास्यायाꣳ स्वाध्यायमधीते तप एव तत्तप्यते तपो हि स्वाध्याय इत्युत्तमं नाकꣳ रोहत्युत्तमस्समानानां भवति यावन्तꣳ ह वा इमां वित्तस्य पूर्णां ददथ्स्वर्गं लोकं जयति तावन्तं लोकं जयति भूयाꣳसं चाक्षय्यं चाप पुनर्मृत्युं जयति ब्रह्मणस्सायुज्यं गच्छति ॥

तस्य वा एतस्य यज्ञस्य द्वावनध्यायौ यदाऽऽत्माऽशुचिर्यद्देशस्समृद्धिर्देवतानि य एवं विद्वान्महारात्र उषस्युदिते व्रजꣳस्तिष्ठन्नासीनश्शयानोऽरण्ये ग्रामे वा यावत्तरसꣳ स्वाध्यायमधीते सर्वाँल्लोकाञ्जयति सर्वाँल्लोकाननृणोऽनु संचरति तदेषाऽभ्युक्ता ॥ अनृणा अस्मिन्ननृणाः परस्मिꣳस्तृतीये लोके अनृणास्स्याम । ये देवयाना उत पितृयाणास्सर्वान्पथो अनृणा आक्षीयेमेत्यग्निं वै जातं पाप्मा जग्राह तं देवा आहुतीभिः पाप्मानमपघ्नन्नाहुतीनां यज्ञेन यज्ञस्य दक्षिणाभिर्दक्षिणानां ब्राह्मणेन ब्राह्मणस्य छन्दोभिश्छन्दसाꣳ स्वाध्यायेनापहतपाप्मा स्वाध्यायो देवपवित्रं वा एतत्तं योऽनूत्सृजत्यभागो वाचि भवत्यभागो नाके तदेषाऽभ्युक्ता । यस्तित्याज सखिविदꣳ सखायं न तस्य वाच्यपि भागो अस्ति । यदीꣳ शृणोत्यलकꣳ शृणोति न हि प्रवेद सुकृतस्य पन्थामिति तस्मात्स्वाध्यायोऽध्येतव्यो यं यं क्रतुमधीते तेनतेनास्येष्टं भवत्यग्नेर्वायोरादित्यस्य सायुज्यं गच्छति तदेषाऽभ्युक्ता । ये अर्वाङुत वा पुराणे वेदं विद्वाꣳसमभितो वदन्त्यादित्यमेव ते परिवदन्ति सर्वे अग्निं द्वितीयं तृतीयं च हꣳसमिति यावतीर्वै देवतास्तास्सर्वा वेदविदि ब्राह्मणे वसन्ति तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवेदिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदेता एव देवताः प्रीणाति ॥

रिच्यत इव वा एष प्रेव रिच्यते यो याजयति प्रति वा गृह्णाति याजयित्वा प्रतिगृह्य वाऽनश्नन्त्रिस्स्वाध्यायं वेदमधीयीत त्रिरात्रं वा सावित्रीं गायत्रीमन्वातिरेचयति वरो दक्षिणा वरेणैव वरꣳ स्पृणोत्यात्मा हि वरः ॥

दुहे ह वा एष छन्दांऽसि यो याजयंति स येनं यज्ञक्रतुनां याजयेथ्सोऽरंण्यं परेत्यं शुचौ देशे स्वांध्यायमेवैनमधीयन्नासीत तस्यानशंनं दीक्षा स्थानमुंपसद आसंनऽ सुत्या वाग्जुहूर्मनं उपभृद्धृतिर्धुवा प्राणो हविस्सामांध्वर्युस्स वा एष यज्ञः प्राणदंक्षिणोऽनंन्तदक्षिणस्समृंद्धतरः ॥

कतिधाऽवंकीर्णी प्रविशतिं चतुर्धेत्यांहुर्ब्रह्मवादिनों मरुतः प्राणैरिन्द्रं बलेंन बृहस्पतिं ब्रह्मवर्चसेनाग्निमेवेतरेण सर्वेंण तस्यैतां प्रायंश्चित्तिं विदाञ्चंकार सुदेवः कांश्यपो यो ब्रंह्मचार्यंवकिरेंदमावास्यांयाऽ रात्र्यांमग्निं प्रणीयोंपसमाधाय द्विराज्यंस्योपघातं जुहोति कामावंकीर्णोऽस्म्यवं-कीर्णोऽस्मि कामकामांय स्वाहा कामाभिंद्रुग्धोऽस्म्यभिंद्रुग्धोऽस्मि काम-कामांय स्वाहेत्यमृतं वा आज्यंममृतंमेवात्मन्धंत्ते हुत्वा प्रयंताञ्जलिः कवांतिर्यङ्ङग्निमभि मंन्त्रयेत सं मां सिञ्चन्तु मरुतस्समिन्द्रस्सं बृहस्पतिः । सं माऽयमग्निस्सिंञ्चत्वायुंषा च बलेंन चायुंष्मन्तं करोतमेति प्रतिं हास्मै मरुतः प्राणान्दंधति प्रतीन्द्रो बलं प्रति बृहस्पतिंर्ब्रह्मवर्चसं प्रत्यग्निरितरथ्सर्वंऽ सर्वंतनुर्भूत्वा सर्वमायुंरेति त्रिरभिमंन्त्रयेत त्रिषंत्या हि देवा योऽपूंत इव मन्येंत स इत्थं जुंहुयादित्थमभिमंन्त्रयेत पुनीत एवात्मानमायुंरेवात्मन्धंत्ते वरो दक्षिंणा वरेंणैव वरंऽँ स्पृणोत्यात्मा हि वरः ॥

भूः प्रपंद्ये भुवः प्रपंद्ये स्वः प्रपंद्ये भूर्भुवस्स्वः प्रपंद्ये ब्रह्म प्रपंद्ये ब्रह्मकोशं प्रपंद्येऽमृतं प्रपंद्येऽमृतकोशं प्रपंद्ये चतुर्जालं ब्रंह्मकोशं यं मृत्युर्नावपश्यंति तं प्रपंद्ये देवान्प्रपंद्ये देवपुरं प्रपंद्ये परींवृतो वरींवृतो ब्रह्मंणा वर्मंणाऽहं तेजंसा कश्यंपस्य यस्मै नमस्तच्छिरो धर्मो मूर्धानं ब्रह्मोत्तंरा हनुंर्यज्ञोऽधंरा विष्णुर्

हृदय९ संवथ्सरः प्रजननमश्विनौ पूर्वपादावत्रिर्मध्यं मित्रावरुणावपरपादावग्निः पुच्छस्य प्रथमं काण्डं तत इन्द्रस्ततः प्रजापतिरभयं चतुर्थ९ स वा एष दिव्यश्शाक्वरश्शिशुमारस्त९ ह य एवं वेदाप पुनर्मृत्युं जयति जयति स्वर्गं लोकं नाध्वनि प्रमीयते नाग्नौ प्रमीयते नाप्सु प्रमीयते नानपत्यः प्रमीयते लघ्वान्नो भवति ध्रुवस्त्वमसि ध्रुवस्यक्षितमसि त्वं भूतानामधिपतिरसि त्वं भूताना९ श्रेष्ठोऽसि त्वां भूतान्युपपर्यावर्तन्ते नमस्ते नमस्सर्वं ते नमो नमश्शिशुकुमाराय नमः ॥

नमः प्राच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमो दक्षिणायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमः प्रतीच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नम उदीच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नम ऊर्ध्वायै दिशे याश्च देवता एतस्यां प्रतिं वसन्त्येताभ्यश्च नमो नमोऽधरायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमोऽवान्तरायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमो गङ्गायमुनयोर्मध्ये ये वसन्ति ते मे प्रसन्नात्मानश्चिरं जीवितं वर्धयन्ति नमो गङ्गायमुनयोर्मुनिभ्यश्च नमो नमो गङ्गायमुनयोर्मुनिभ्यश्च नमः ॥

सह रक्षा९सि यद्देवास्सप्तदश यददीव्यन्पञ्चदशायुष्टे चतुस्त्रि९शद्वै-श्वानराय षड्वि९शतिर्वातरशना ह कूश्माण्डैरजान् ह पञ्च ब्रह्मयज्ञेन ग्रामे मध्यन्दिने तस्य वै मेघस्तस्य वै द्वौ रिच्यते दुहे हं कतिधाऽवकीर्णी भूर्नमः प्राच्यै वि९शतिः ॥ सह ब्रह्मयज्ञेन वि९शतिः । सह मुनिभ्यश्च नमः ॥

ॐ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

## कूश्माण्डहवनमन्त्राः

ॐ यद्देवादेव हेळनं.......स्वाहा ॥ इत्यादि पुनर्मनः पुनरायुर्म इत्यन्तं एकपञ्चाशत् आहुतीर्हुत्वा ।

ॐ सिꣳहे व्याघ्र उतया पृदाकौ.....सा न आगन्वर्चसा संविदाना स्वाहा ॥ या राजन्ये.....संविदाना स्वाहा ॥ या हस्तिनि......संविदाना स्वाहा ॥ रथे अक्षेषु......संविदाना स्वाहा ॥

ॐ अग्नेऽभ्यावर्तिन्नभिन आवर्तस्वायुषा वर्चसा सन्या मेधया प्रजया धनेन स्वाहा ॥

अग्ने अङ्गिरः शतं ते सन्त्वावृतः सहस्रं त उपावृतः । तासां पोषस्य पोषेण पुनर्नो नष्टमाकृधि पुनर्नो रयिमा कृधि स्वाहा ॥

पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा । पुनर्नः पाहि विश्वतः स्वाहा ॥

सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्निया विश्वतस्परि स्वाहा ॥

ॐ अग्ने नय सुपथा राये अस्मान्। विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनः। भूयिष्ठान्ते नमउक्तिं विधेम॥ प्र वः शुक्राय भानवे भरध्वम्। हव्यं मतिं चाग्नये सुपूतम्। यो दैव्यानि मानुषा जनूꣳषि। अन्तर्विश्वानि विद्मना जिगाति॥ अच्छा गिरो मतयो देवयन्तीः। अग्निं यन्ति द्रविणं भिक्षमाणाः। सुसंदृशꣳ सुप्रतीकꣳ स्वञ्चम्। हव्यवाहमरतिं मानुषाणाम्॥ अग्ने त्वमस्मद्युयोध्यमीवाः। अनग्नित्रा अभ्यमन्त कृष्टीः। पुनरस्मभ्यꣳ सुवितायं देव। क्षां विश्वेभिरजरेभिर्यजत्र॥ अग्ने त्वं पारया नव्यो अस्मान्। स्वस्तिभिरति दुर्गाणि विश्वा। पूश्च पृथ्वी बहुला न उर्वी। भवा तोकाय तनयाय शंयोः॥ प्रकारवो मनना वच्यमानाः। देवद्रीचीं नयथ देवयन्तः। दक्षिणावाड्वाजिनी प्राच्येति। हविर्भरन्त्यग्नये घृताचीं॥ सहस्रशीर्षा पुरुषः० साध्याः सन्ति देवाः॥ अग्नेर्मन्वे प्रथमस्य प्रचेतसो० प्रतरान्न आयुः॥ यावामिन्द्रावरुणा यतव्या तनूस्तयेम० मुञ्चतम्॥ यो वामिन्द्रावरुणावग्नौ० तं वामेतेनावयजे॥ पवमानः सुवर्जनः० मोर्जयन्त्या पुनातु॥ यद्देवा देवहेडनं० भेषजम्॥ वैश्वानरो न ऊत्या प्रयातु परावतः। अग्निरुक्थेन वाहसा॥ ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम्। अजस्रं घर्ममीमहे॥ वैश्वानरस्य दꣳसनाभ्यो बृहदरिणादेकः स्वपस्यया कविः। उभा पितरा महयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा॥ पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश। वैश्वानरः सहसा पृष्टो अग्निः स नो

दिवा स रिषः पातु नक्तम् ॥ जातो यदग्ने भुवना व्यख्यः पशुं न गोपा इर्यः परिज्मा । वैश्वानर ब्रह्मणे विन्द गातुं यूयं पात स्वस्तिभिः सदा नः ॥ त्वमग्ने शोचिषा शोशुचान आरोदसी अपृणा जायमानः । त्वं देवाꣳ अभिशस्तेरमुञ्चो वैश्वानर जातवेदो महित्वा ॥ अस्माकमग्ने मघवत्सु धारयानामि क्षत्रमजरꣳ सुवीर्यम् । वयं जयेम शतिनꣳ सहस्रिणं वैश्वानर वाजमग्ने तवोतिभिः ॥ वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः । इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण ॥

[१]सिꣳहे मे मन्युः । व्याघ्रे मेऽन्तरामयः । वृके मे क्षुत् । अश्वे मे घ्रसिः । धन्वनि मे पिपासा । राजगृहे मेऽशनया । अश्मनि मे तन्द्रिः । गर्दभे मेऽर्शः । शय्यके मे ह्लीः । अश्वत्थे मे वेपथुः ॥ कूर्मे मेऽङ्गरोगः । बस्ते मेपसर्या । अप्रिये मे मृत्युः । भ्रातृव्ये मे पाप्मा । सपत्ने मे निर्ऋतिः । दुष्कीर्तौ मे व्यृद्धिः । परस्वति मे समृद्धिः । खड्गे म आर्तिः । गवये म आन्ध्यम् । गौरे मे बाधिर्यम् ॥ ऋक्षे मे शोकः । गोधायां मे स्वेदः । जरायां मे हिमः । कृष्णशकुनौ मे भीरुता । कशे मे पापगन्धः । उलूके मेऽश्मयशाः । क्रोके म ईर्ष्या । मर्कटे मे दुर्ऋद्धिः । कुलले मे मꣳस्या । उलले मे प्रध्या ॥ उष्ट्रे मे तृष्णा । ऋश्ये मे श्रमः । अव्यां म आव्यम् । कोशे मे गन्धः । कुमार्यां मेऽलङ्कारः । सूकरे मे क्रदथुः । प्रदाखुनि मे स्वप्नः । अजगरे मे दुःस्वप्नः । विद्युति मे स्म यशः । लोभायांमं क्लेदः ॥ शरभे मे पाप्मालक्ष्मीः । स्त्रीषु मेऽनृतम् । अजासु मे कर्कशः । व्रात्ये म ईर्त्या । शूद्रे मे स्तेयम् । वैश्ये मे

१. सैत्रमन्त्राः.

कार्मकृत्यम् । राजन्यबन्धुनि मेऽज्ञानम् । नैषादे मे ब्रह्महत्या । कुलिङ्गे मे क्षवथुः । उलले मे विलासः ॥ उद्रिणि मेऽवमतिः । किम्पुरुषे मे रोदः । द्वीपिनि मे निष्टपत् । हस्तिनि मे किलासः । शुनि मे दुरिम् । स्रावन्त्येषु मे म्लेच्छः । विदेहेषु मे शीपथः । महावर्षेषु मे ग्लौः । मूजवत्सु मे तप्मा । दुन्दुभौ मे कासिका ॥ इक्ष्वाकुषु मे पित्तम् । कलिङ्गेषु मेऽमेध्यम् । अश्वतर्यां मेऽप्रजस्ता । पुꣳश्चल्यां मे दुश्चरितम् । आखुनि मे दन्तरोगः । मक्षिकायां मे श्लक्शः । शुके मे हरिमा । मयूरे मे जल्प्या । वृषे मे जरा । चाषे मे पापवादः ॥ अप्सु मे श्रमः । ब्रह्मोज्झे मे किल्बिषम् । अपेहि पाप्मन्पुनरपनाशितो भवानः पाप्मन्त्सुकृतस्य लोके पाप्मन्धेह्यविहृतो यो नः पाप्मन्नजहाति । तमुत्वा जहिमोवयमन्यत्रास्मन्निविशताम् । सहस्राक्षो अमर्त्यो यो नो द्वेष्टि स रिष्यतु । यमु द्विष्मस्तमु जहि । सुमित्रा न आप ओषधयः सन्तु दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥

ಆಆಆ

# चित्तिप्रश्नः

तै. आरण्यकं, तृतीयः प्रपाठकः

ॐ तच्छंयोरावृंणीमहे। गातुं यज्ञायं। गातुं यज्ञपंतये। दैवीं स्वस्तिरंस्तु नः। स्वस्तिर्मानुंषेभ्यः। ऊर्ध्वं जिंगातु भेषजम्। शन्नों अस्तु द्विपदें। शं चतुंष्पदे॥ ॐ शान्तिः शान्तिः शान्तिः॥

ॐ चित्तिः स्रुक्। चित्तमाज्यंम्। वाग्वेदिः। आधींतं बर्हिः। केतों अग्निः। विज्ञांतमग्निः। वाक्पंतिर्होतां। मनं उपवक्ता। प्राणो हविः। सामांध्वर्युः। वाचंस्पते विधे नामन्न्। विधेमं ते नामं। विधेस्त्वमस्माकं नामं। वाचस्पतिः सोमं पिबतु। आऽस्मासु नृम्णं धात्स्वाहां। (अध्वर्युः पञ्चं च)

पृथिवी होतां। द्यौरंध्वर्युः। रुद्रोंऽग्नीत्। बृहस्पतिंरुपवक्ता। वाचंस्पते वाचो वीर्येंण। सम्भृंततमेना यंक्ष्यसे। यजंमानाय वार्यंम्। आ सुवस्करंस्मै। वाचस्पतिः सोमं पिबति। जजनदिन्द्रंमिन्द्रियाय स्वाहां॥ (पृथिवी होता दशं)

अग्निर्होतां। अश्विनांऽध्वर्यू। त्वष्टाऽग्नीत्। मित्र उंपवक्ता। सोमः सोमंस्य पुरोगाः। शुक्रः शुक्रस्यं पुरोगाः। श्रातास्तं इन्द्र सोमाः। वातांपेर्हवनश्रुतः स्वाहां॥ (अग्निर्होताष्टौ)

सूर्यं ते चक्षुंः। वातं प्राणः। द्यां पृष्ठम्। अन्तरिंक्षमात्मा। अङ्गैंर्यज्ञम्। पृथिवीꣳ शरींरैः। वाचंस्पतेऽच्छिंद्रया वाचा। अच्छिंद्रया जुह्वां। दिवि देंवावृधꣳ होत्रा मेरंयस्व स्वाहां॥ (सूर्यं ते नवं)

महाहंविर् होतां। सत्यहंविरध्वर्युः। अच्युंतपाजा अग्नीत्। अच्युंतमना उपवक्ता। अनाधृष्यश्चांप्रतिधृष्यश्चं यज्ञस्यांभिगरौ। अयास्यं उद्गाता। वाचंस्पते हृद्विधे नामन्न्। विधेमं ते नामं। विधेस्त्वमस्माकं नामं। वाचस्पतिः सोमंमपात्। मा दैव्यस्तन्तुश्छेदि मा मंनुष्यः। नमों दिवे। नमः पृथिव्यै स्वाहां। (अपान्त्रीणिं च)

वाग्घोतां। दीक्षा पत्नीं। वातोंऽध्वर्युः। आपोंऽभिगरः। मनों हविः। तपंसि जुहोमि। भूर्भुवः सुवंः। ब्रह्म स्वयम्भु। ब्रह्मंणे स्वयम्भुवे स्वाहां॥ (वाग्घोता नवं)

ब्राह्मण एकंहोता। स यज्ञः। स में ददातु प्रजां पशून्पुष्टिं यशंः। यज्ञश्चं मे भूयात्। अग्निर्द्विहोंता। स भर्ता। स में ददातु प्रजां पशून्पुष्टिं यशंः। भर्ता चं मे भूयात्। पृथिवी त्रिहोंता। स प्रंतिष्ठा। स में ददातु प्रजां पशून्पुष्टिं यशंः। प्रतिष्ठा चं मे भूयात्। अन्तरिंक्षं चतुंर्होता। स विष्ठाः। स में ददातु प्रजां पशून्पुष्टिं यशंः। विष्ठाश्चं मे भूयात्। वायुः पञ्चंहोता। स प्राणः। स में ददातु प्रजां पशून्पुष्टिं यशंः। प्राणश्चं मे भूयात्। चन्द्रमाः षड्ढोंता। स ऋतून्कंल्पयाति। स में ददातु प्रजां पशून्पुष्टिं यशंः। ऋतवंश्च मे कल्पन्ताम्। अन्नं९ सप्तहोंता। स प्राणस्यं प्राणः। स में ददातु प्रजां पशून्पुष्टिं यशंः। प्राणस्यं च मे प्राणो भूंयात्। द्यौरष्टहोंता। सोंऽनाधृष्यः। स में ददातु प्रजां पशून्पुष्टिं यशंः। अनाधृष्यश्चं भूयासम्। आदित्यो नवंहोता। स तेंजस्वी। स में ददातु प्रजां पशून्पुष्टिं यशंः। तेजस्वी चं

भूयासम् । प्रजापतिर्दशहोता । स इदꣳ सर्वम् । स मे ददातु प्रजां पशून्पुष्टिं यशः । सर्वं च मे भूयात् ॥ (प्रतिष्ठा प्राणश्च मे भूयादनाधृष्यः सर्वं च मे भूयात् । ब्राह्मणो यज्ञोऽग्निर्भर्ता पृथिवी प्रतिष्ठाऽन्तरिक्षं विष्ठा वायुः प्राणश्चन्द्रमा स ऋतूनꣳ स प्राणस्य प्राणो द्यौरनाधृष्य आदित्यः स तेजस्वी प्रजापतिः स इदꣳ सर्वं च मे भूयात्)

अग्निर्यजुर्भिः । सविता स्तोमैः । इन्द्र उक्थामदैः । मित्रा वरुणा-वाशिषा । अङ्गिरसो धिष्णियैरग्निभिः । मरुतः सदोहविर्धानाभ्याम् । आपः प्रोक्षणीभिः । ओषधयो बर्हिषा । अदितिर्वेद्या । सोमो दीक्षया । त्वष्टेध्मेन । विष्णुर्यज्ञेन । वसव आज्येन । आदित्या दक्षिणाभिः । विश्वे देवा ऊर्जा । पूषा स्वगाकारेण । बृहस्पतिः पुरोधया । प्रजापतिरुद्गीथेन । अन्तरिक्षं पवित्रेण । वायुः पात्रैः । अहꣳश्रद्धया ॥ (दीक्षया पात्रैरेकं च)

सेनेन्द्रस्य । धेना बृहस्पतेः । पथ्या पूष्णः । वग्वायोः । दीक्षा सोमस्य । पृथिव्यग्नेः । वसूनां गायत्री । रुद्राणां त्रिष्टुक् । आदित्यानां जगती । विष्णोरनुष्टुक् । वरुणस्य विराट् । यज्ञस्य पङ्क्तिः । प्रजापतेरनुमतिः । मित्रस्य श्रद्धा । सवितुः प्रसूतिः । सूर्यस्य मरीचिः । चन्द्रमसो रोहिणी । ऋषीणामरुन्धती । पर्जन्यस्य विद्युत् । चतस्रो दिशः । चतस्रोऽवान्तरदिशाः । अहश्च रात्रिश्च । कृषिश्च वृष्टिश्च । त्विषिश्चापचितिश्च । आपश्चौषधयश्च । ऊर्क्च सूनृता च देवानां पत्नयः । (अनुष्टुग्दिशः षट् च)

देवस्य त्वा सवितुः प्रसवे । अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्यां

प्रतिगृह्णामि। राजा त्वा वरुणो नयतु देवि दक्षिणेऽग्नये हिरण्यम्। तेनामृतत्वमश्याम्। वयो दात्रे। मयो मह्यमस्तु प्रतिग्रहीत्रे। क इदं कस्मा अदात्। कामः कामाय। कामो दाता॥ कामः प्रतिग्रहीता। कामꣳ समुद्रमाविश। कामेन त्वा प्रतिगृह्णामि। कामैतत्ते। एषा ते काम दक्षिणा। उत्तानस्त्वाऽऽङ्गीरसः प्रतिगृह्णातु। सोमाय वासः। रुद्राय गाम्। वरुणायाश्वम्। प्रजापतये पुरुषम्॥ मनवे तल्पम्। त्वष्ट्रेऽजाम्। पूष्णेऽविम्। निर्ऋत्या अश्वतरगर्दभौ। हिमवतो हस्तिनम्। गन्धर्वाप्सराभ्यः स्रगलङ्करणे। विश्वेभ्यो देवेभ्यो धान्यम्। वाचेऽन्नम्। ब्रह्मण ओदनम्। समुद्रायापः॥ उत्तानायाऽऽङ्गीरसायानः। वैश्वानराय रथम्। वैश्वानरः प्रत्नथा नाकमारुहत्। दिवः पृष्ठं भन्दमानः सुमन्मभिः। स पूर्ववज्जनयञ्जन्तवे धनम्। समानमज्मा परियाति जागृविः। राजा त्वा वरुणो नयतु देवि दक्षिणे वैश्वानराय रथम्। तेनामृतत्वमश्याम्। वयो दात्रे। मयो मह्यमस्तु प्रतिग्रहीत्रे॥ क इदं कस्मा अदात्। कामः कामाय। कामो दाता। कामः प्रतिग्रहीता। कामꣳ समुद्रमाविश। कामेन त्वा प्रतिगृह्णामि। कामैतत्ते। एषा ते काम दक्षिणा। उत्तानस्त्वाङ्गीरसः प्रतिगृह्णातु॥ (दाता पुरुषमापः प्रतिग्रहीत्रे नव च)

सुवर्णं घर्मं परिवेद वेनम्। इन्द्रस्यात्मानं दशधा चरन्तम्। अन्तः समुद्रे मनसा चरन्तम्। ब्रह्मान्वविन्दद्दशहोतारमर्णे। अन्तः प्रविष्टः शास्ता जनानाम्। एकः सन्बहुधा विचारः। शतꣳ शुक्राणि यत्रैकं भवन्ति। सर्वे वेदा यत्रैकं भवन्ति। सर्वे होतारो यत्रैकं भवन्ति। स मानसीन आत्मा जनानाम्॥ अन्तः प्रविष्टः शास्ता जनानाꣳ सर्वात्मा। सर्वाः प्रजा यत्रैकं

भवन्ति । चतुर्होतारो यत्र सम्पदं गच्छन्ति देवैः । स मानसीन आत्मा जनानाम् । ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठाम् । दिव आत्मानꣳ सवितारं बृहस्पतिम् । चतुर्होतारं प्रदिशोऽनुक्लृप्तम् । वाचो वीर्यं तपसाऽन्वविन्दत् । अन्तः प्रविष्टं कर्तारमेतम् । त्वष्टारꣳ रूपाणि विकुर्वन्तं विपश्चिम् ॥ अमृतस्य प्राणं यज्ञमेतम् । चतुर्होतृणामात्मानं कवयो निचिक्युः । अन्तः प्रविष्टं कर्तारं मेतम् । देवानां बन्धु निहितं गुहासु । अमृतेन क्लृप्तं यज्ञमेतम् । चतुर्होतृणामात्मानं कवयो निचिक्युः । शतं नियुतः परिवेद विश्वा विश्ववारः । विश्वमिदं वृणाति । इन्द्रस्यात्मा निहितः पञ्चहोता । अमृतं देवानामायुः प्रजानाम् ॥ इन्द्रꣳ राजानꣳ सवितारमेतम् । वायोरात्मानं कवयो निचिक्युः । रश्मिꣳ रश्मीनां मध्ये तपन्तम् । ऋतस्य पदे कवयो निपान्ति । य आण्डकोशे भुवनं बिभर्ति । अनिर्भिण्णः सन्नथ लोकान् विचष्टे । यस्याण्डकोशꣳ शुष्ममाहुः प्राणमुल्बम् । तेन क्लृप्तोऽमृतेनाहमस्मि । सुवर्णं कोशꣳ रजसा परीवृतम् । देवानां वसुधानीं विराजम् ॥ अमृतस्य पूर्णां तामु कलां विचक्षते । पादꣳ षड्ढोतुर्न किलाविवित्से । येनर्तवः पञ्चधोत क्लृप्ताः । उत वा षड्धा मनसोत क्लृप्ताः । तꣳ षड्ढोतारमृतुभिः कल्पमानम् । ऋतस्य पदे कवयो निपान्ति । अन्तः प्रविष्टं कर्तारमेतम् । अन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः । इन्द्रस्यात्मानꣳ शतधा चरन्तम् ॥ इन्द्रो राजा जगतो य ईशे । सप्तहोता सप्तधा विक्लृप्तः । परेण तन्तुं परिषिच्यमानम् । अन्तरादित्ये मनसा चरन्तम् । देवानाꣳ हृदयं ब्रह्मान्वविन्दत् । ब्रह्मैतद्ब्रह्मण उज्जभार । अर्कꣳ श्चोतन्तꣳ सरिरस्य मध्ये ।

आयस्मिँन्त्सप्त पेरवः। मेहंन्ति बहुलाँ श्रियम्। बहुश्वामिंन्द्रगोमंतीम्॥ अच्युंतां बहुलाँ श्रियम्। स हरिर्वसुवित्तमः। पेरुरिन्द्राय पिन्वते। बहुश्वामिंन्द्रगोमंतीम्। अच्युंतां बहुलाँ श्रियम्। मह्यमिन्द्रो नियंच्छतु। शतँ शता अंस्य युक्ता हरीणाम्। अर्वाङायांतु वसुंभी रश्मिरिन्द्रः। प्रमँ हंमाणो बहुलाँ श्रियम्। रश्मिरिन्द्रः सविता मे नियंच्छतु॥ घृतं तेजो मधुंमदिन्द्रियम्। मय्ययमग्निर्दधातु। हरिः पतङ्गः पटरी सुंपर्णः। दिविक्षयो नभंसा य एतिं। स न इन्द्रः कामवरं दंदातु। पञ्चांरंचक्रं परिंवर्तते पृथु। हिरंण्य ज्योतिः सरिरस्य मध्यें। अजंस्रं ज्योतिनभंसा सर्पदेति। स न इन्द्रः कामवरं दंदातु। सप्त युंञ्जन्ति रथमेकंचक्रम्॥ एको अश्वों वहति सप्तनामा। त्रिनाभिंचक्रमजरमनर्वम्। येनेमा विश्वा भुवंनानि तस्थुः। भद्रं पश्यंन्त उपंसेदुरग्रें। तपों दीक्षामृषंयः सुवर्विदः। ततः क्षत्रं बलमोजंश्च जातम्। तदस्मै देवा अभिसन्नंमन्तु। श्वेतँ रश्मिं बोंभुज्यमांनम्। अपां नेतारं भुवंनस्य गोपाम्। इन्द्रं निचिंक्युः परमे व्योंमन्॥ रोहिंणीः पिङ्गला एकंरूपाः। क्षरंन्तीः पिङ्गला एकंरूपाः। शतँ सहस्राणि प्रयुतांनि नाव्यांनाम्। अयं यः श्वेतो रश्मिः। परिसर्वमिदं जगंत्। प्रजां पशून्धनांनि। अस्माकं ददातु। श्वेतो रश्मिः परि सर्वं बभूव। सुवन्मह्यं पशून् विश्वरूंपान्। पतङ्गमक्तमसुंरस्य मायया॥ हृदा पंश्यन्ति मनंसा मनीषिणंः। समुद्रे अन्तः कवयो विचंक्षते। मरीचीनां पदमिंच्छन्ति वेधसंः। पतङ्गो वाचं मनंसा बिभर्ति। तां गन्धर्वोऽवदद्गर्भे अन्तः। तां द्योतंमानाँ स्वर्यं मनीषाम्। ऋतस्यं पदे कवयो निपांन्ति। ये ग्राम्याः पशवों विश्वरूंपाः। विरूंपाः सन्तों

बहुधैकंरूपाः। अग्निस्ताऽ अग्रे प्रमुंमोक्तु देवः॥ प्रजापंतिः प्रजयां संविदानः। वीतऽँ स्तुंकेस्तुके। युवमस्मासु नियंच्छतम्। प्रप्रं यज्ञपंतिं तिर। ये ग्राम्याः पशवों विश्वरूपाः। विरूंपाः सन्तों बहुधैकंरूपाः। तेषांऽ सप्तानामिह रन्तिंरस्तु। रायस्पोषांय सुप्रजास्त्वार्यं सुवीर्यांय। य आंरण्याः पशवों विश्वरूंपाः। विरूंपाः सन्तों बहुधैकंरूपाः॥ वायुस्ताऽ अग्रे प्रमुंमोक्तु देवः। प्रजापंतिः प्रजयां संविदानः। इडांयै सृप्तं घृतवंच्चराचरम्। देवा अन्वंविन्दन्गुहांहितम्। य आंरण्याः पशवों विश्वरूंपाः। विरूंपाः सन्तों बहुधैकंरूपाः। तेषांऽ सप्तानामिह रन्तिंरस्तु। रायस्पोषांय सुप्रजास्त्वार्यं सुवीर्यांय। (आत्मा जनांनां विकुर्वन्तं विपश्चिं प्रजानां वसुधानीं विराजं चरंन्तं गोमंतीं मे नियंच्छत्वेकंचक्रं व्योंमन्मायया देव एकंरूपा अष्टौ चं)

सहस्रंशीर्षा पुरुंषः ० सन्तिं देवाः॥ अद्भ्यः सम्भूंतः ० सर्वं मनिषाण॥

**भर्तृसूक्तम्** – भर्ता सन्भ्रियमांणो बिभर्ति। एकों देवो बंहुधा निविंष्टः। यदा भारं तन्द्रयंते स भर्तुंम्। निधायं भारं पुनरस्तंमेति। तमेव मृत्युममृतं तमांहुः। तं भर्तारं तमुं गोप्तारंमाहुः। स भृतो भ्रियमांणो बिभर्ति। य एनं वेदं सत्येन भर्तुंम्। सद्यो जातमुत जंहात्येषः। उतो जरंन्तं न जंहात्येकंम्॥ उतो बहूनेकमहंर्जहार। अतंन्द्रो देवः सदंमेव प्रार्थः। यस्तद्वेद यतं आबभूवं। संधां च याऽसंन्दधे ब्रह्मंणैषः। रमंते तस्मिन्नुत जीर्णे शयांने। नैनं जहात्यहंःसु पूर्व्येषुं। त्वामापो अनुसर्वांश्चरन्ति जानतीः। वत्सं पयंसा पुनानाः।

त्वमग्निꣳ हव्यवाहꣳ समिन्त्से। त्वं भर्ता मातरिश्वा प्रजानाम्॥ त्वं यज्ञस्त्वमुवेवासि सोमः। तव देवा हवमायन्ति सर्वे। त्वमेकोऽसि बहूननुप्रविष्टः। नमस्ते अस्तु सुहवो म एधि। नमो वामस्तु शृणुतꣳ हवं मे। प्राणापानावजिरꣳ सञ्चरन्तौ। ह्वयामि वां ब्रह्मणा तूर्तमेतम्। यो मां द्वेष्टि तं जहि तं युवाना। प्राणापानौ संविदानौ जहितम्। अमुष्यासुना मा सङ्गसाथाम्॥ तं मे देवा ब्रह्मणा संविदानौ। वधाय दत्तं तमहꣳ हनामि। असज्जजान सत आ बभूव। यं यं जजान स उ गोपो अस्य। यदा भारं तन्द्रयते स भर्तुम्। परास्य भारं पुनरस्तमेति। तद्वै त्वं प्राणो अभवः। महान्भोगः प्रजापतेः। भुजः करिष्यमाणः। यद्देवान्प्राणयो नव। (एकं प्रजानां गसाथां नव)

हरिꣳ हरन्तमनु यन्ति देवाः। विश्वस्येशानं वृषभं मतीनाम्। ब्रह्म सरूपमनुमेदमागात्। अयनं मा विवधीर्विक्रमस्व। मा छिदो मृत्यो मा वधीः। मा मे बलं विवृहो मा प्रमोषीः। प्रजां मा मे रीरिष आयुरुग्र। नृचक्षसं त्वा हविषा विधेम। सद्यश्चकमानाय। प्रवेपानाय मृत्यवे॥

प्रास्मा आशा अशृण्वन्। कामेनाजनयन्पुनः। कामेन मे काम आगात्। हृदयाद्धृदयं मृत्योः। यदमीषामदः प्रियम्। तदैतूपमामभि। परं मृत्यो अनु परेहि पन्थाम्। यस्ते स्व इतरो देवयानात्। चक्षुष्मते शृण्वते ते ब्रवीमि। मा नः प्रजाꣳ रीरिषो मोत वीरान्। प्र पूर्व्यं मनसा वन्दमानः। नाधमानो वृषभं चर्षणीनाम्। यः प्रजानामेकराण्मानुषीणाम्। मृत्युं यजे प्रथमजामृतस्य। (मृत्यवे वीराꣳश्चत्वारि च)

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य। विश्वमाभासि रोचनम्। उपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वत एष ते योनिः सूर्याय त्वा भ्राजस्वते ॥

आप्यायस्व मदिन्तम सोम विश्वाभिरूतिभिः। भवा नः सप्रथस्तमः ॥

ईयुष्टे ये पूर्वतरामपश्यन्व्युच्छन्तीमुषसं मर्त्यासः। अस्माभिरू नु प्रतिचक्ष्याभूदो ते यन्ति ये अपरीषु पश्यान् ॥

ज्योतिष्मतीं त्वा सादयामि ज्योतिष्कृतन्त्वा सादयामि ज्योतिर्विदन्त्वा सादयामि भास्वतीं त्वा सादयामि ज्वलन्तीं त्वा सादयामि मल्मलाभवन्तीं त्वा सादयामि दीप्यमानां त्वा सादयामि रोचमानां त्वा सादयाम्यजस्रां त्वा सादयामि बृहज्ज्योतिषं त्वा सादयामि बोधयन्तीं त्वा सादयामि जाग्रतीं त्वा सादयामि ॥

प्रयासाय स्वाहाऽऽयासाय स्वाहा वियासाय स्वाहा संयासाय स्वाहोद्यासाय स्वाहावऽयासाय स्वाहा शुचे स्वाहा शोकाय स्वाहा तप्यत्वै स्वाहा तपते स्वाहा ब्रह्महत्यायै स्वाहा सर्वस्मै स्वाहा ॥

चितꣳ सन्तानेन भवं यक्ना रुद्रं तनिम्ना पशुपतिꣳ स्थूलहृदयेनाग्निꣳ हृदयेन रुद्रं लोहितेन शर्वं मतस्नाभ्यां महादेवमन्तः पार्श्वेनौषिष्ठहनꣳ शिङ्गीनिकोश्याभ्याम् ॥

चित्तिः पृथिव्यग्निः सूर्यं ते चक्षुर्महाहविर्होता वाग्घोता ब्राह्मण एकं

होताऽग्निर्यजुर्भिः सेनेन्द्रस्य देवस्य सुवर्णं घर्म९ सहस्रशीर्षाब्धो भर्ता हरिं तरणिराप्यायस्वेयुष्टे ये ज्योतिष्मती प्रयासायं चित्तमेकंवि९शतिः ॥

चित्तिरग्निर्यजुर्भिरन्तः प्रविष्टः प्रजापतिः प्रजायां संविदानस्तस्य धीरा ज्योतिष्मती त्रिपंञ्चाशत् । चित्तिः शिङ्गीनिकोश्याभ्याम् ॥

ॐ तच्छंयोरावृणीमहे। गातुं यज्ञाय। गातुं यज्ञपतये। दैवीं स्वस्तिरस्तु नः। स्वस्तिर्मानुषेभ्यः। ऊर्ध्वं जिगातु भेषजम्। शं नो अस्तु द्विपदे। शं चतुष्पदे ॥ ॐ शान्तिः शान्तिः शान्तिः ॥



# अन्नसूक्तम्

ॐ ओदनमुद्ब्रुवते । परमेष्ठी वा एषः । यदोदनः । परमामेवैनꣳ श्रियं गमयति ॥ यन्तु नदयो वर्षन्तु पर्जन्याः । सुपिप्पला ओषधयो भवन्तु । अन्नवतामोदनवतामामिक्षवताम् । एषाꣳ राजा भूयासम् ॥

[1]आब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामाऽस्मिन्राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य वीरो जायतां निकामेनिकामे नः पर्जन्यो वर्षतु फलिन्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥

[2]आब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामित्याह । ब्राह्मण एव ब्रह्मवर्चसं दधाति । तस्मात्पुरा ब्राह्मणो ब्रह्मवर्चस्यजायत । आऽस्मिन्राष्ट्रे राजन्य इषव्यꣳशूरो महारथो जायतामित्याह । राजन्य एव शौर्यं महिमानं दधाति । तस्मात्पुरा राजन्य इषव्यः शूरो महारथोऽजायत । दोग्ध्री धेनुरित्याह । धेन्वामेव पयो दधाति । तस्मात्पुरा दोग्ध्री धेनुरजायत । वोढाऽनड्वा-नित्याह ॥ अनडुह्येव वीर्यं दधाति । तस्मात्पुरा वोढाऽनड्वानजायत । आशुस्सप्तिरित्याह । अश्व एव जवं दधाति । तस्मात्पुराऽऽशुरश्वोऽजायत । पुरन्धिर्योषेत्याह । योषित्येव रूपं दधाति । तस्मात्स्त्री युवतिः प्रिया भावुका । जिष्णू रथेष्ठा इत्याह । आह वै तत्र जिष्णू रथेष्ठा जायते ॥ यत्रैतेन यज्ञेन यजन्ते । सभेयो युवेत्याह । यो वै पूर्ववयसी । स सभेयो युवा । तस्माद्युवा

---

१. तै.सं. ७-५-१८.   २. तै.ब्रा. ३-८-१३.

पुमाँन्प्रियो भावुंकः । आऽस्य यजंमानस्य वीरो जांयतामित्यांह । आह वै तत्र यजंमानस्य वीरो जांयते । यत्रैतेनं यज्ञेन यजंन्ते । निकामेनिंकामे नः पर्जन्यों वर्षत्वित्यांह । निकामेनिंकामे ह वै तत्रं पर्जन्यों वर्षति ॥ यत्रैतेनं यज्ञेन यजंते । फलिन्यों न ओषंधयः पच्यन्तामित्यांह । फलिन्यों ह वै तत्रौषंधयः पच्यन्ते । यत्रैतेनं यज्ञेन यजंते । योगक्षेमो नंः कल्पतामित्यांह । कल्पंते ह वै तत्रं प्रजाभ्यों योगक्षेमः । यत्रैतेनं यज्ञेन यजंन्ते ॥

नमः सहंमानाय निव्याधिनं आव्याधिनीनां पतंये नमो नमंः ककुभायं निषङ्गिणें स्तेनानां पतंये नमो नमों निषङ्गिणं इषुधिमते तस्कंराणां पतंये नमो नमो वञ्चंते परिवञ्चंते स्तायूनां पतंये नमो नमों निचेरवें परिचरायाऽऽरंण्यानां पतंये नमो नमंः सृकाविभ्यो जिघांँसभ्द्यो मुष्णतां पतंये नमो नमोंऽसिमभ्द्यो नक्तं चरंभ्द्यः प्रकृन्तानां पतंये नमो नमं उष्णीषिणें गिरिचरायं कुलुञ्चानां पतंये नमो नम इषुंमभ्द्यो धन्वाविभ्यंश्च वो नमो नमं आतन्वानेभ्यंः प्रतिदधांनेभ्यश्च वो नमो नमं आयच्छंभ्द्यो विसृजभ्द्यंश्च वो नमो नमोऽस्यंभ्द्यो विध्यंभ्द्यश्च वो नमो नम आसींनेभ्यः शयांनेभ्यश्च वो नमो नमंः स्वपभ्द्यो जाग्रंभ्द्यश्च वो नमो नमस्तिष्ठंभ्द्यो धावंभ्द्यश्च वो नमो नमंः सभाभ्यंः सभापंतिभ्यश्च वो नमो नमो अश्वेभ्योऽश्वंपतिभ्यश्च वो नमंः ॥

[1]किँस्विदासीत्पूर्वचिंत्तिः किँ स्विदासीद्बृहद्वयंः । किँ स्विदासीत्पिशंगिला किँ स्विदासीत्पिलिप्पिला ॥ द्यौरांसीत्पूर्वचिंत्तिरश्वं आसीद्बृहद्वयंः । रात्रिंरासीत्पिशंगिलाऽविंरासीत्पिलिप्पिला ॥ कः स्विदेकाकी

---

१. तै.सं. ७-४-१८.

चरति क उं स्विज्जायते पुनः। कि॑ स्विद्धिमस्य भेषजं कि॑ स्विदावपनं महत्॥ सूर्य एकाकी चरति चन्द्रमा जायते पुनः। अग्निर् हिमस्य भेषजं भूमिरावपनं महत्॥ पृच्छामि त्वा परमं तं पृथिव्याः पृच्छामि त्वा भुवनस्य नाभिम्। पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम॥ वेदिमाहुः परमंतं पृथिव्या यज्ञमाहुर्भुवनस्य नाभिम्॥ सोममाहुर्वृष्णो अश्वस्य रेतो ब्रह्मैव वाचः परमं व्योम॥

[१]तेजसा वा एष ब्रह्मवर्चसेन व्यृध्यते। योऽश्वमेधेन यजते। होता च ब्रह्मा च ब्रह्मोद्यं वदतः। तेजसा चैवैनं ब्रह्मवर्चसेन च समर्धयतः। दक्षिणतो ब्रह्मा भवति। दक्षिणत आयतनो वै ब्रह्मा। बार्हस्पत्यो वै ब्रह्मा। ब्रह्मवर्चसमेवास्य दक्षिणतो दधाति। तस्माद्दक्षिणोर्धो ब्रह्मवर्चसितरः। उत्तरतो होता भवति॥ उत्तरत आयतनो वै होता। आग्नेयो वै होता। तेजो वा अग्निः। तेज एवास्योत्तरतो दधाति। तस्मादुत्तरोर्धस्तेजस्वितरः। यूपमभितो वदतः। यजमानदेवत्यो वै यूपः। यजमानमेव तेजसा च ब्रह्मवर्चसेन च समर्धयतः। कि॑ स्विदासीत्पूर्वचित्तिरित्याह। द्यौर्वै वृष्टिः पूर्वचित्तिः॥ दिवमेव वृष्टिमवरुन्धे। कि॑ स्विदासीद्बृहद्वय इत्याह। अश्वो वै बृहद्वयः। अश्वमेवावरुन्धे। कि॑ स्विदासीत्पिशङ्गिलेत्याह। रात्रिर्वै पिशङ्गिला। रात्रिमेवावरुन्धे। कि॑ स्विदासीत्पिलिप्पिलेत्याह। श्रीर्वै पिलिप्पिला। अन्नाद्यमेवावरुन्धे॥ कः स्विदेकाकी चरतीत्याह। असौ वा आदित्य एकाकी चरति। तेज एवावरुन्धे। क उं स्विज्जायते पुनरित्याह।

चन्द्रमा वै जायते पुनः। आयुरेवावरुन्धे। किꣳस्विद्धिमस्य भेषजमित्याह। अग्निर्वै हिमस्य भेषजम्। ब्रह्मवर्चसमेवावरुन्धे। किꣳस्विदावपनं महदित्याह॥ अयं वै लोक आवपनं महत्। अस्मिन्नेव लोके प्रतितिष्ठति। पृच्छामि त्वा परमन्तं पृथिव्या इत्याह। वेदिर्वै परोऽन्तः पृथिव्याः। वेदिमेवावरुन्धे। पृच्छामि त्वा भुवनस्य नाभिमित्याह। यज्ञो वै भुवनस्य नाभिः। यज्ञमेवावरुन्धे। पृच्छामि त्वा वृष्णो अश्वस्य रेत इत्याह। सोमो वै वृष्णो अश्वस्य रेतः। सोमपीथमेवावरुन्धे। पृच्छामि वाचः परमं व्योमेत्याह। ब्रह्म वै वाचः परमं व्योम। ब्रह्मवर्चसमेवावरुन्धे॥

[१]प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत्। स आत्मन्नश्वमेधमधत्त। तं देवा अब्रुवन्। एष वाव यज्ञः। यदश्वमेधः। अप्येव नोऽत्रास्त्विति। तेभ्य एतानन्नहोमान्प्रायच्छत्। तानजुहोत्। तैर्वै स देवानप्रीणात्। यदन्नहोमाञ्जुहोति॥ देवानेव तैर्यजमानः प्रीणाति। आज्येन जुहोति। अग्नेर्वा एतद्रूपम्। यदाज्यम्। यदाज्येन जुहोति। अग्निमेव तत्प्रीणाति। मधुना जुहोति। महत्यै वा एतद्देवतायै रूपम्। यन्मधु। यन्मधुना जुहोति॥ महतीमेव तद्देवतां प्रीणाति। तण्डुलैर्जुहोति। वसूनां वा एतद्रूपम्। यत्तण्डुलाः। यत्तण्डुलैर्जुहोति। वसूनेव तत्प्रीणाति। पृथुकैर्जुहोति। रुद्राणां वा एतद्रूपम्। यत्पृथुकाः। यत्पृथुकैर्जुहोति॥ रुद्रानेव तत्प्रीणाति। लाजैर्जुहोति। आदित्यानां वा एतद्रूपम्। यल्लाजाः। यल्लाजैर्जुहोति। आदित्यानेव तत्प्रीणाति। करम्भैर्जुहोति। विश्वेषां वा एतद्देवानाꣳ रूपम्।

---

१. तै.ब्रा. ३-८-१४.

यत्करम्बाः। यत्करम्बैर्जुहोति॥ विश्वानेव तद्देवान्प्रीणाति। धानाभिर्जुहोति। नक्षत्राणां वा एतद्रूपम्। यद्धानाः। यद्धानाभिर्जुहोति। नक्षत्राण्येव तत्प्रीणाति। सक्तुभिर्जुहोति। प्रजापतेर्वा एतद्रूपम्। यत्सक्तवः। यत्सक्तुभिर्जुहोति॥ प्रजापतिमेव तत्प्रीणाति। मसूस्यैर्जुहोति। सर्वासां वा एतद्देवतानाꣳ रूपम्। यन्मसूस्यानि। यन्मसूस्यैर्जुहोति। सर्वा एव तद्देवताः प्रीणाति। प्रियङ्गुतण्डुलैर्जुहोति। प्रियाङ्गा ह वै नामैते। एतैर्वै देवा अश्वस्याङ्गानि समदधुः। यत्प्रियङ्गुतण्डुलैर्जुहोति। अश्वस्यैवाङ्गानि सन्दधाति। दशान्नानि जुहोति। दशाक्षरा विराट्। विराट्कृत्स्नस्यान्नाद्यस्यावरुद्ध्यै॥

[१]प्रजापतिरकामयत महानन्नादः स्यामिति। स एतावश्वमेधे महिमानावपश्यत्। तावगृह्णीत। ततो वै स महानन्नादोऽभवत्। यः कामयेत महानन्नादः स्यामिति। स एतावश्वमेधे महिमानौ गृह्णीत। महानेवान्नादो भवति। यजमानदेवत्या वै वपा। राजा महिमा। यद्वपां महिम्नोभयतः परियजति॥ यजमानमेव राज्येनोभयतः परिगृह्णाति। पुरस्तात्स्वाहाकारा वा अन्ये देवाः। उपरिष्टात्स्वाहाकारा अन्ये। ते वा एतेऽश्व एव मेध्ये उभयेऽवरुध्यन्ते। यद्वपां महिम्नोभयतः परियजति। तानेवोभयान्प्रीणाति॥

[२]प्रजापतिः प्रजा असृजत। ता अस्मात्सृष्टाः पराचीरायन्। स एतं प्रजापतिरोदनमपश्यत्। सोऽन्नम्भूतोऽतिष्ठत्। ता अन्यत्रान्नाद्यमवित्वा। प्रजापतिं प्रजा उपावर्तन्त। अन्नमेवैनं भूतं पश्यन्तीः प्रजा उपावर्तन्ते। य

---

१. तै.ब्रा. ३-९-१०.   २. तै.ब्रा. २-७-९.

एतेन यजंते। य उं चैनमेवं वेदं। सर्वाण्यन्नांनि भवन्ति॥ सर्वे पुरुंषाः। सर्वाण्येवान्नान्यवंरुन्धे। सर्वान्पुरुंषान्। राडंसि विराडसीत्यांह। स्वाराज्य-मेवैनं गमयति। यद्धिरंण्यं ददांति। तेजस्तेनावंरुन्धे। यत्तिंसृधन्वम्। वीर्यं तेनं। यदष्ट्राम्॥ पुष्टिन्तेनं। यत्कंमण्डलुम्। आयुष्टेनं। यद्धिरंण्यमाबध्नाति। ज्योतिर्वै हिरंण्यम्। ज्योतिंरेवास्मिंन्दधाति। अथो तेजो वै हिरंण्यम्। तेजं एवात्मन्धंत्ते। यदोंदनं प्राश्नातिं। एतदेव सर्वमवरुध्यं॥ तदंस्मिन्ने-कधाऽधांत्। रोहिण्यां कार्यंः। यद्ब्राह्मण एव रौंहिणी। तस्मांदेव। अथो वर्ष्मैवैनं समानानां करोति। उद्यता सूर्येण कार्यंः। उद्यन्तं वा एत सर्वाः प्रजाः प्रतिंनन्दन्ति। दिदृक्षेण्यों दर्शनीयों भवति। य एवं वेदं। ब्रह्मवादिनों वदन्ति॥ अवेत्योंऽवभृथा३ ना३ इतिं। यदंर्भपुञ्जीलैः पवयंति। तत्स्विंदेवावैति। तन्नावैति। त्रिभिः पंवयति। त्रयं इमे लोकाः। एभिरेवैनं लोकैः पंवयति। अथों अपां वा एतत्तेजो वर्चः। यद्दर्भाः। यदंर्भपुञ्जीलैः पवयंति। अपामेवैनं तेजंसा वर्चंसाऽभिषिंञ्चति॥

[1]अहमंस्मि प्रथमजा ऋतस्यं। पूर्वं देवेभ्यो अमृतंस्य नाभिः। यो मा ददांति स इदेव माऽऽवाः। अहमन्नमन्नंमदन्तमद्मि। पूर्वमग्नेरपिं दहत्यन्नम्। यत्तौ हांऽऽसाते अहमुत्तरेषुं। व्यात्तमस्य पशवंस्सुजम्भम्। पश्यन्ति धीराः प्रचंरन्ति पाकाः। जहांम्यन्यं न जंहाम्यन्यम्। अहमन्नं वशमिच्चंरामि॥ समानमर्थं पर्येमि भुञ्जत्। कोमामन्नं मनुष्यों दयेत। परांके अन्नं निहिंतं लोक एतत्। विश्वैर्देवैः पितृभिर्गुप्तमन्नम्। यदद्यतें लुप्यते यत्परोप्यतें। शततमी

सा तनूर्मे बभूव। महान्तौ चरू संकृद्दुग्धेनं पप्रौ। दिवंञ्च पृश्निं पृथिवीं चं साकम्। तत्सम्पिबंन्तो न मिंनन्ति वेधसंः। नैतद्भूयो भवंति नो कनींयः॥ अन्नं प्राणमन्नंमपानमांहुः। अन्नं मृत्युं तमुं जीवातुंमाहुः। अन्नं ब्रह्माणों जरसं वदन्ति। अन्नंमाहुः प्रजननं प्रजानांम्। मोघमन्नं विन्दते अप्रंचेताः। सत्यं ब्रंवीमि वध इत्सतस्यं। नार्यमणं पुष्यंति नो सखांयम्। केवंलाघो भवति केवलादी। अहं मेघस्तनयन्वर्षन्नस्मि। मामंदन्त्यहमंद्मयन्यान्। अहꣳ सदमृतों भवामि। मदांदित्या अधि सर्वे तपन्ति॥

[1]अन्नाद्वै प्रजाः प्रजायंन्ते। याः काश्चं पृथिवीꣳश्रिताः। अथो अन्नेनैव जींवन्ति। अथैनदपिं यन्त्यन्ततः। अन्नꣳ हि भूतानां ज्येष्ठंम्। तस्मांत्सर्वौषधमुंच्यते। सर्वं वै तेऽन्नंमाप्नुवन्ति। येऽन्नं ब्रह्मोपासंते। अन्नꣳ हि भूतानां ज्येष्ठंम्। तस्मांत्सर्वौषधमुंच्यते। अन्नांद्भूतानि जायंन्ते। जातान्यन्नेन वर्धन्ते। अद्यतेऽत्ति चं भूतानि। तस्मादन्नं तदुच्यंत इति। तस्माद्वा एतस्मादन्नंरसमयात्। अन्योऽन्तर आत्मा प्राणमयः। तेनैष पूर्णः। स वा एष पुरुषविंध एव। तस्य पुरुंषविधताम्। अन्वयं पुरुषविधः। तस्य प्राणं एव शिरः। व्यानो दक्षिणः पक्षः। अपान उत्तंरः पक्षः। आकांश आत्मा। पृथिवी पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति। प्राणं देवा अनु प्राणंन्ति। मनुष्याः पशवंश्च ये। प्राणो हि भूतानामायुः। तस्मांत्सर्वायुषमुंच्यते। सर्वमेव त आयुर्यन्ति। ये प्राणं ब्रह्मोपासंते। प्राणो

---

१. तै.उ. २-२.

हि भूतानामायुः। तस्मात्सर्वायुषमुच्यंत इति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य। तस्माद्वा एतस्मात्प्राणमयात्। अन्योऽन्तर आत्मा मनोमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य यजुरेव शिरः। ऋग्दक्षिणः पक्षः। सामोत्तरः पक्षः। आदेश आत्मा। अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति॥ यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कदाचनेति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य। तस्माद्वा एतस्मान्मनोमयात्। अन्योऽन्तर आत्मा विज्ञानमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य श्रद्धैव शिरः। ऋतं दक्षिणः पक्षः। सत्यमुत्तरः पक्षः। योग आत्मा। महः पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति। अन्नं न निन्द्यात्। तद्व्रतम्। प्राणो वा अन्नम्। शरीरमन्नादम्। प्राणे शरीरं प्रतिष्ठितम्। शरीरे प्राणः प्रतिष्ठितः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान्कीर्त्या। अन्नं न परिचक्षीत। तद्व्रतम्। आपो वा अन्नम्। ज्योतिरन्नादम्। अप्सु ज्योतिः प्रतिष्ठितम्। ज्योतिष्यापः प्रतिष्ठिताः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान्कीर्त्या। अन्नं बहु कुर्वीत। तद्व्रतम्। पृथिवी वा अन्नम्। आकाशोऽन्नादः। पृथिव्यामाकाशः प्रतिष्ठितः। आकाशे पृथिवी प्रतिष्ठिता। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद

प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या । न कञ्चन वसतौ प्रत्याचक्षीत । तद्व्रतम् । तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात् । अराध्यस्मा अन्नमित्याचक्षते । एतद्वै मुखतोऽन्नꣳ राद्धम् । मुखतोऽस्मा अन्नꣳ राध्यते । एतद्वै मध्यतोऽन्नꣳ राद्धम् । मध्यतोऽस्मा अन्नꣳ राध्यते । एतद्वा अन्ततोऽन्नꣳ राद्धम् । अन्ततोऽस्मा अन्नꣳ राध्यते । य एवं वेद । क्षेम इति वाचि । योगक्षेम इति प्राणापानयोः । कर्मेति हस्तयोः । गतिरिति पादयोः । विमुक्तिरिति पायौ । इति मानुषीः समाज्ञाः । अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति । यश इति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इत्युपस्थे । सर्वमित्याकाशे । तत्प्रतिष्ठेत्युपासीत । प्रतिष्ठावान्भवति । तन्मह इत्युपासीत । महान्भवति । तन्मन इत्युपासीत । मानवान्भवति । तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद्ब्रह्मेत्युपासीत । ब्रह्मवान्भवति । तद्ब्रह्मणः परिमर इत्युपासीत । पर्येणं म्रियन्ते द्विषन्तः सपत्नाः । परि येऽप्रिया भ्रातृव्याः । स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवं वित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसंक्रम्य । एतं प्राणमयमात्मानमुपसंक्रम्य । एतं मनोमयमात्मानमुपसंक्रम्य । एतं विज्ञानमयमात्मानमुपसंक्रम्य । एतमानन्द-मयमात्मानमुपसंक्रम्य । इमाँल्लोकान्कामान्नी कामरूप्यनुसञ्चरन् । एतत्साम गायन्नास्ते । हा३वुहा३वुहा३वु । अहमन्नमहमन्नमहमन्नम् । अहमन्नादो३ऽहमन्नादो३ऽहमन्नादः । अहꣳ श्लोककृदहꣳ श्लोककृदहꣳ श्लोककृत् । अहमस्मि प्रथमजा ऋता३स्य । पूर्वं देवेभ्यो अमृतस्य ना३भायि । यो मा ददाति स

इदेवमा३वाः । अहमन्नमन्नमदन्तमा३द्मि । अहं विश्वं भुवनमभ्यभवाम् । सुर्वनः ज्योतीः । य एवं वेद । इत्युपनिषत् ॥

[१]आज्यमसि सत्यमसि सत्यस्याध्यक्षमसि हविरसि वैश्वानरं वैश्वदेवमुत्पूतशुष्मꣳ सत्यौजाः सहोऽसि सहमानमसि सहस्वारातीः सहस्वारातीयतस्सहस्व पृतनाः सहस्व पृतन्यतः । सहस्रवीर्यमसि तन्मा जिन्वाज्यस्याऽऽज्यमसि सत्यस्य सत्यमसि सत्यायुरसि सत्यशुष्ममसि सत्येन त्वाऽऽभिघारयामि तस्य ते भक्षीय ॥

नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

---

१. तै.सं. १-६-१.

# अभिश्रवणमन्त्राः

ॐ नमो ब्रह्मणे नमों अस्त्वग्नये नमः पृथिव्यै नम ओषंधीभ्यः। नमों वाचे नमों वाचस्पतंये नमो विष्णंवे बृहते कंरोमि। ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ [1]सह वै देवानां चासुंराणां च यज्ञौ प्रतंतावास्तां वयँ स्वर्गं लोकमैंष्यामो वयमैंष्याम इति तेऽसुंराः सन्नह्य सहंसैवाचंरन्ब्रह्मचर्येण तपंसैव देवास्तेऽसुंरा अमुह्यँ स्ते न प्राजांनँस्ते परांभवन्ते न स्वर्गं लोक मांयन्प्रसृंतेन वै यज्ञेनं देवाः स्वर्गं लोकमांयन्नप्रसृंतेनासुंरान्परांऽभावयन्प्रसृंतो ह वै यंज्ञोपवीतिनों यज्ञोऽप्रंसृतोऽनुंपवीतिनो यत्किञ्चं ब्राह्मणो यंज्ञोपवीत्यधींते यजंत एव तत्तस्मांद्यज्ञोपवीत्यैवाधीयीत याजयेद्यजेंत वा यज्ञस्य प्रसृंत्या अजिंनं वासों वा दक्षिणत उंपवीय दक्षिंणं बाहुमुद्धंरतेऽवंधत्ते सव्यमितिं यज्ञोपवीतमेतदेव विपंरीतं प्राचीनावीतँ संवीतं मानुषम् ॥

रक्षांँसि ह वां पुरोनुवाके तपोग्रंमतिष्ठन्त तान्प्रजापंतिर्वरेणोपा-मंन्त्रयत तानि वरंमवृणीताऽदित्यो नो योद्धा इति तान्प्रजापंतिरब्रवीद्योधंय-ध्वमिति तस्मादुत्तिंष्ठन्तँ ह वा तानि रक्षांँस्यादित्यं योधंयन्ति यावंदस्तमन्वंगात्तानिं ह वा एतानि रक्षांँसि गायत्रियाऽभिंमन्त्रितेनाम्भंसा शाम्यन्ति तदु ह वा एते ब्रंह्मवादिनंः पूर्वाभिंमुखाः सन्ध्यायां गायत्रियाऽभिंमन्त्रिता आपं ऊर्ध्वं विक्षिंपन्ति ता एता आपों वज्रीभूत्वा तानि

---

रक्षांऽसि मन्देहारुणे द्वीपे प्रक्षिपन्ति यत्प्रदक्षिणं प्रक्रमन्ति तेनं पाप्मानमवधून्वन्त्युद्यन्तमस्तं यन्तमादित्यमभि ध्यायन्कुर्वन्ब्राह्मणो विद्वान्त्सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन्ब्रह्माप्येति य एवं वेदं ॥

[१]आ प्र यच्छदक्षिणादोत सव्यात् । विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांऽसि यो अस्कंभायदुत्तरऽ सधस्थं विचक्रमाण-स्त्रेधोरुगायः ॥

[२]तदस्य प्रियमभि पाथो अश्याम् । नरो यत्र देवयवो मदन्ति । उरुक्रमस्य स हि बन्धुरित्था । विष्णोः पदे परमे मध्व उत्सः ॥ प्र तद्विष्णुः स्तवते वीर्याय । मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेषु । अधि क्षियन्ति भुवनानि विश्वा ॥ परो मात्रया तनुवा वृधान । न ते महित्वमन्वश्नुवन्ति । उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वम् । परमस्य वित्से ॥ विचक्रमे पृथिवीमेष एताम् । क्षेत्राय विष्णुर्मनुषे दशस्यन् । ध्रुवासो अस्य कीरयो जनासः । उरुक्षितिऽ सुजनिमाचकार ॥ त्रिर्देवः पृथिवीमेष एताम् । विचक्रमे शतर्चसं महित्वा । प्र विष्णुरस्तु तवसस्तवीयान् । त्वेषऽँ ह्यस्य स्थविरस्य नाम ॥

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाऽ इभेन । तृष्वीमनुप्रसितिं द्रूणानोऽस्तासि विध्यरक्षसस्तपिष्ठैः ॥ तव भ्रमास आशुया

पंतन्त्यनुंस्पृश धृषता शोशुंचानः। तपूं॑ष्यग्ने जुह्वां पतङ्गानसंन्दितो विसृज विष्वंगुल्काः॥ प्रतिस्पशो विसृंज तूर्णितमो भवां पायुर्विशो अस्या अदंब्धः। यो नों दूरे अघशं॑सो यो अन्त्यग्ने माकिष्टे व्यथिरादंधर्षीत्॥ उदंग्ने तिष्ठ प्रत्यातंनुष्व न्यंमित्रां॑ ओषतात्तिग्महेते। यो नो अरांति॑ समिधानचक्रे नीचा तन्धंक्ष्यतसं न शुष्कंम्॥ ऊर्ध्वो भंव प्रतिंविध्याध्यस्मदाविष्कृंणुष्व दैव्यांन्यग्ने। अवंस्थिरा तंनुहि यातुजूनां जामिमजांमिं प्रमृंणीहि शत्रूंन्॥ स ते जानाति सुमतिं यंविष्ठ य ईवंते ब्रह्मंणे गातुमैरंत्। विश्वांन्यस्मै सुदिनांनि रायो द्युम्नान्यर्यो विदुरों अभिद्यौंत्॥ सेदंग्ने अस्तु सुभगंः सुदानुर्यस्त्वा नित्येंन हविषा य उक्थैः। पिप्रींषति स्व आयुंषि दुरोणे विश्वेदंस्मै सुदिना सासंदिष्टिः॥ अर्चांमि ते सुमतिं घोष्यर्वाक्सन्तें वावातां जरतामियङ्गीः। स्वश्वांस्त्वा सुरथांमर्जयेमास्मे क्षत्राणिं धारयेरनु द्यून्॥ इह त्वा भूर्याचरेदुपत्मन्दोषांवस्तर्दीदिवा॑समनु द्यून्। क्रीडंन्तस्त्वा सुमनंसः सपेमाभि द्युम्ना तंस्थिवा॑सो जनांनाम्॥ यस्त्वा स्वश्वंः सुहिरण्यो अंग्न उपयाति वसुंमता रथेंन। तस्यं त्राता भंवसि तस्य सखा यस्तं आतिथ्यमांनुषग्जुजोंषत्॥ महो रुंजामि बन्धुता वचोंभिस्तन्मां पितुर्गोतंमा-दन्वियाय। त्वं नों अस्य वचंसश्चिकिद्धि होतंर्यविष्ठ सुक्रतो दमूंनाः॥ अस्वंप्नजस्तरणंयः सुशेवा अतंन्द्रासोऽवृका अश्रंमिष्ठाः। ते पायवंः सध्रियंञ्चो निषद्याग्ने तवं नः पान्त्वमूर॥ ये पायवों मामतेयन्ते अग्ने पश्यंन्तो अन्धन्दुंरितादरंक्षन्। ररक्ष तान्त्सुकृतों विश्ववेंदा दिप्संन्त इद्रिपवो ना हं देभुः॥ त्व यां वयं॑ संधन्यंस्त्वोतास्तव प्रणीत्यश्याम वाजांन्। उभा

शꣳसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण ॥ अया ते अग्ने समिधा विधेम प्रति स्तोमꣳ शस्यमानं गृभाय । दहाशसो रक्षसः पाह्यस्मान्द्रुहो निदो मित्रमहो अवद्यात् ॥ रक्षोहणं वाजिनमाजिघर्मि मित्रं प्रथिष्ठमुपयामि शर्म । शिशानो अग्निः क्रतुभिः समिद्धस्स नो दिवा स रिषः पातु नक्तम् ॥ वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा । प्रादेवीर्मायास्सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे ॥ उत स्वानासो दिवि षन्त्वग्नेस्तिग्मायुधा रक्षसे हन्तवा उ । मदे चिदस्य प्ररुजन्ति भामा न वरन्ते परिबाधो अदेवीः ॥

[1]ये देवाः पुरःसदोऽग्निनेत्रा दक्षिणसदो यमनेत्राः पश्चात्सदः सवितृनेत्रा उत्तरसदो वरुणनेत्रा उपरिषदो बृहस्पतिनेत्रा रक्षोहणस्ते नः पान्तु तेनोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा समूढꣳ रक्षः सन्दग्धꣳ रक्ष इदमहꣳ रक्षोऽभि सन्दहाम्यग्नये रक्षोघ्ने स्वाहा यमाय सवित्रे वरुणाय बृहस्पतये दुवस्वते रक्षोघ्ने स्वाहा प्रष्टिवाही रथो दक्षिणा देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ रक्षसो वधं जुहोमि हतꣳ रक्षोऽवधिष्म रक्षो यद्वस्ते तद्दक्षिणा ॥

[2]स एतानपामार्गानजनयत् । ताञ्जुहोत् । तैर्वै स रक्षाꣳस्यपाहत । यदपामार्गहोमो भवति । रक्षसामपहत्यै । एकोल्मुकेन यन्ति । तद्धि रक्षसां भागधेयम् । इमां दिशं यन्ति । एषा वै रक्षसां दिक् । स्वायामेव दिशि रक्षाꣳसि हन्ति ॥ स्वकृत इरिणे जुहोति प्रदरे वा । एतद्वै रक्षसामायतनम् । स्व एवायतने रक्षाꣳसि हन्ति । पर्णमयेन स्रुवेण जुहोति । ब्रह्म वै पर्णः ।

---

१. तै.सं. १-८-७.   २. तै.ब्रा. १-७-१.

ब्रह्मणैव रक्षांऽसि हन्ति। देवस्यं त्वा सवितुः प्रंसव इत्यांह। सवितृप्रसूत एव रक्षांऽसि हन्ति। हतऽ रक्षोऽवंधिष्म रक्ष इत्यांह। रक्षंसाऽ स्तृत्यैं। यद्वस्ते तद्दक्षिंणा निरवंत्यै। अप्रंतीक्षमायंन्ति। रक्षंसामन्तरहिंत्यै॥

[1]रक्षोहणौं वलगहनौं वैष्णवान्खंनामीदमहं तं वंलगमुद्वंपामि यं नंस्समानो यमसंमानो निचखानेदमेंनमधंरं करोमि यो नंः समानो योऽसंमानोऽरातीयति गायत्रेण छन्दसाऽवंबाढो वलगः किमत्रं भद्रं तनौं सह विराडंसि सपत्नहा सम्राडंसि भ्रातृव्यहा स्वराडंस्यभिमातिहा विश्वाराडंसि विश्वांसां नाष्ट्राणांऽ हन्ता॥ रक्षोहणौं वलगहनः प्रोक्षांमि वैष्णवान्रंक्षोहणौं वलगहनोऽवंनयामि वैष्णवान् यवौंऽसि यवयास्मद्द्वेषौं यवयारांती रक्षोहणौं वलगहनोऽवंस्तृणामि वैष्णवान्रंक्षोहणौं वलगहनोऽभि जुंहोमि वैष्णवान्रंक्षो-हणौं वलगहनावुपंदधामि वैष्णवी रंक्षोहणौं वलगहनौ पर्यूंहामि वैष्णवी रंक्षोहणौं वलगहनौ परिं स्तृणामि वैष्णवी रंक्षोहणौं वलगहनौं वैष्णवी बृहन्नंसि बृहद्ग्रांवा बृहतीमिन्द्रांय वाचं वद॥

[2]सोमांय पितृमतें पुरोडाशऽ षट्कंपालं निर्वंपति पितृभ्यों बर्हिषद्भ्यों धानाः पितृभ्योंऽग्निष्वात्तेभ्योंऽभिवान्यांयै दुग्धे मन्थमेतत्तें तत ये च त्वामन्वेतत्तें पितामह प्रपितामह ये च त्वामन्वत्रं पितरो यथाभागं मंन्दध्वऽ सुसदृशं त्वा वयं मघंवन्मन्दिषीमहिं। प्र नूनं पूर्णवंन्धुरस्तुतो यांसि वशाऽ अनुं। योजान्विन्द्र ते हरीं। अक्षं नमींमदन्तह्यवं प्रिया अंधूषत। अस्तौषत

स्वभानवो विप्रा नविष्ठया मती। योजान्विन्द्र ते हरी ॥ अक्षन्पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरोऽमीमृजन्त पितरः ॥ परेत पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः। अथा पितृन्त्सुविदत्राँ अपीत यमेन ये सधमादं मदन्ति ॥ मनोन्वाहुवामहे नाराशꣳसेन स्तोमेन पितृणां च मन्मभिः ॥

आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे। ज्योक्च सूर्यं दृशे ॥ पुनर्नः पितरो मनो ददातु दैव्यो जनः। जीवं व्रातꣳ सचेमहि॥ यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिꣳसिम। अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेनसम् ॥

[1]उशन्तस्त्वा हवामह उशन्तः समिधीमहि। उशन्नुशत आवह पितॄन् हविषे अत्तवे ॥ त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठमनु नेषि पन्थाम्। तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ॥ त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः। वन्वन्नवातः परिधीꣳ रपोर्णु वीरेभिरश्वैर्मघवा भवा नः ॥ त्वꣳ सोम पितृभिः संविदानोऽनु द्यावापृथिवी आ ततन्थ। तस्मै त इन्दो हविषा विधेम वयꣳस्याम पतयो रयीणाम् ॥ अग्निष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः। अत्ता हवीꣳषि प्रयतानि बर्हिष्यथा रयिꣳ सर्ववीरं दधातन ॥ बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम्। त आ गतावसा शन्तमेनाथस्मभ्यꣳ शं योररपो दधात ॥ आऽहं पितॄन्त्सुविदत्राँ अवित्सि नपातं च विक्रमणं च

विष्णोः। बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहाऽऽगमिष्ठाः॥ उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु। त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु ते अवन्त्वस्मान्॥ उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः। असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु॥ इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः। ये पार्थिवे रजस्या निषत्ता यो वा नूनꣳ सुवृजनासु विक्षु॥ अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः। शुचीदयन्दीधितिमुक्थशासः क्षामा भिन्दन्तो अरुणी-रपव्रन्॥ यदग्ने कव्यवाहन पितॄन् यक्ष्यृतावृधः। प्र च हव्यानि वक्ष्यसि देवेभ्यश्च पितृभ्य आ॥ तमग्न ईडितो जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वा। प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवीꣳषि॥ मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर् ऋक्वभिर्वावृधानः। याꣳश्च देवा वावृधुर्ये च देवान्स्वाहाऽन्ये स्वधयाऽन्ये मदन्ति॥ इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः। आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्व॥ अङ्गिरोभिर गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व॥ विवस्वन्तꣳ हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्या निषद्य॥ अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः। तेषां वयꣳ सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम॥

[1]भक्षेहि माऽऽविश दीर्घायुत्वाय शन्तनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वायेहि वसो पुरोवसो प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्याꣳ

---

सद्ध्यासं नृचक्षसं त्वा देव सोम सुचक्षा अवं ख्येषं मन्द्राऽभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु मन्द्रास्वंर्वाच्यदितिरनाहतशीर्ष्णी वाग्जुषाणा सोमस्य तृप्यत्वेहि विश्वचर्षणे॥ शम्भूर्मयोभूः स्वस्ति मां हरिवर्ण प्र चर क्रत्वे दक्षाय रायस्पोषाय सुवीरतायै मा मां राजन्विबीभिषो मा मे हार्दि त्विषा वधीः। वृषणे शुष्मायायुषे वर्चसे॥ वसुमद्गणस्य सोम देव ते मतिविदः प्रातस्सवनस्य गायत्र छन्दस इन्द्रं पीतस्य नराश९संपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि रुद्रवद्गणस्य सोम देवते मतिविदो माध्यांन्दिनस्य सवनस्य त्रिष्टप्छन्दस इन्द्रपीतस्य नराश९संपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयाम्यादित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीछन्दस इन्द्रपीतस्य नराश९संपीतस्य पितृपीतस्य मधमत उपहूतस्योपहूतो भक्षयामि॥ आ प्यायस्व समेतु ते विश्वतस्सोमवृष्णियम्। भवा वाजस्य सङ्गथे॥ हिन्वं मे गात्रां हरिवो गणान्मे मा वितीतृषः। शिवो मे सप्तर्षीनुपतिष्ठस्व मा मे वाङ्नाभिमतिं गाः॥ अपाम सोमममृता अभूमादर्शम ज्योतिरविंदाम देवान्। किमस्मान्कृणवदरातिः किमु धूर्तिरमृतमर्त्यस्य॥ यन्म आत्मनो मिन्दाऽभूदग्निस्तत्पुनराहार्जातवेदा विचर्षणिः। पुनरग्निश्चक्षुरदात्पुनरिन्द्रो बृहस्पतिः। पुनर्मे अश्विना युवं चक्षुराधत्तमक्ष्योः॥ इष्टयजुषस्ते देव सोम स्तुतस्तोमस्य। शस्तोक्थस्य हरिवत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि। आपूर्याः स्थाऽऽमा पूरयत प्रजया च धनेन च। एतत्ते तत ये च त्वामन्वेतत्ते पितामह प्रपितामह ये च त्वामन्वत्र पितरो यथाभागं मन्दध्वं नमो वः पितरो रसाय नमो वः पितरः

शुष्मा॑य॒ नमो॑ वः पितरो जी॒वाय॒ नमो॑ वः पितरः। स्व॒धायै॒ नमो॑ वः पितरो म॒न्यवे॒ नमो॑ वः पितरो घो॒राय॒ पित॑रो नमो॑ वो॒ य ए॒तस्मि॑ल्लो॒के स्थ यु॒ष्माँ॒स्तेऽनु॒ यँ॑स्मिँल्लो॒के मां तेऽनु॒ य ए॒तस्मि॑ल्लो॒के स्थ यू॒यं तेषां॒ वसि॑ष्ठा भूयास्त॒ यँऽस्मि॑ल्लो॒केऽहं तेषां॒ वसि॑ष्ठो भूयासं॒ प्रजा॑पते॒ न त्वदे॒तान्य॒न्यो विश्वा॑ जा॒तानि॒ परि॒ ता ब॑भूव। यत्का॑मास्ते जुहु॒मस्तन्नो॑ अस्तु व॒यँ॒स्या॑म॒ पत॑यो र॒यीणाम्॥ दे॒वकृ॑त॒स्यैन॑सोऽव॒यज॑नमसि मनु॒ष्य॑कृत॒स्यैन॑सोऽव॒यज॑नमसि पि॒तृकृ॑त॒स्यैन॑सोऽव॒यज॑नमस्य॒प्सु धौ॒तस्य॑ सोम देव ते॒ नृभि॑ः सु॒तस्ये॒ष्टय॑जुषः स्तु॒तस्तो॑मस्य श॒स्तोक्थ॑स्य॒ यो भ॒क्षो अ॑श्व॒सनि॒र्यो गो॒सनि॒स्तस्य॑ ते पि॒तृभि॑र्भ॒क्षं कृ॑त॒स्योप॑हूत॒स्योप॑हूतो भक्षयामि॥

[1]नम॒स्सुते॑ निर्ऋते विश्वरूपेऽय॒स्मयं॒ विचृ॑ता ब॒न्धमेतम्। य॒मेन॒ त्वं य॒म्यां सं॑वि॒दानोत्त॒मं नाक॒मधि॑रोहये॒मम्। यत्ते॑ दे॒वी निर्ऋ॑तिराब॒बन्ध॒ दाम॑ ग्री॒वास्व॑विच॒र्त्यम्। इ॒दं ते॒ तद्विष्या॒म्यायु॑षो॒ न मध्या॒दथा॑ जी॒वः पि॒तुम॑द्धि॒ प्रमु॑क्तः॥ यस्या॑स्ते अ॒स्याः क्रूर आ॒सं जु॒होम्ये॒षां ब॒न्धाना॑मव॒सर्ज॑नाय। भू॒मिरिति॑ त्वा जना॑ वि॒दुर्निर्ऋ॑ति॒रिति॑ त्वा॒ऽहं परि॑वेद वि॒श्वतः॥ असु॑न्वन्त॒मय॑जमानमिच्छ स्ते॒नस्ये॒त्यां तस्क॑र॒स्यान्वे॑षि। अ॒न्यम॒स्मदि॑च्छ॒ सा त॑ इ॒त्या नमो॑ देवि निर्ऋते॒ तुभ्य॑मस्तु॥ दे॒वीम॒हं निर्ऋ॑तिं॒ वन्द॑मानः पि॒तेव॑ पु॒त्रं द॑सये॒ वचो॑भिः। विश्व॑स्य॒ या जाय॑मानस्य॒ वेद॒ शिर॑ः शिर॒ः प्रति॑सू॒री वि॒च॑ष्टे॥ नि॒वेश॑नः स॒ङ्गम॑नो॒ वसू॑नां॒ विश्वा॑ रू॒पाभि॒च॑ष्टे॒ शची॑भिः॥

---

[1]ध्रुवाऽसिं धरुणाऽस्तृता विश्वकर्मणा सुकृता। मा त्वां समुद्र उद्वंधीन्मा सुंपर्णो व्यंथमाना पृथिवीं दृंᳫह॥ प्रजापंतिस्त्वा सादयतु पृथिव्याः पृष्ठे व्यचंस्वतीं प्रथंस्वतीं प्रथोंऽसि पृथिव्यंसि भूरंसि भूमिंरस्यदिंतिरसि विश्वधांया विश्वंस्य भुवंनस्य धर्त्री पृथिवीं यंच्छ पृथिवीं दृंᳫह पृथिवीं मा हिंᳫसीर्विश्वंस्मै प्राणायांपानायं व्यानायोंदानायं प्रतिष्ठायैं। चरित्रांयाग्निस्त्वाऽभिपांतु मह्या स्वस्त्या छर्दिषा शन्तंमेन तयां देवतंयाङ्गि-रस्वद्ध्रुवा सींद॥ काण्डांत्काण्डात्प्ररोहंन्ती परुंषः परुषः परिं। एवा नों दूर्वे प्र तंनु सहस्रेंण शतेनं च॥ या शतेनं प्रतनोषिं सहस्रेंण विरोहंसि। तस्यांस्ते देवीष्टके विधेमं हविषां वयम्॥ अषांढाऽसि सहंमाना सहस्वारांतीः सहंस्वारातीयतस्सहंस्व पृतंनास्सहंस्व पृतन्यतः। सहस्रंवीर्याऽसि सा मां जिन्व॥ मधु वातां ऋतायते मधुं क्षरन्ति सिंधंवः। माध्वींर्नः सन्त्वोषंधीः। मधु नक्तंमुतोषसि मधुंमत्पार्थिवᳫ रजंः। मधु द्यौरंस्तु नः पिता॥ मधुंमान्नो वनस्पतिर्मधुंमाᳫ अस्तु सूर्यः। माध्वीर्गावों भवन्तु नः॥ मही द्यौः पृथिवी चं न इमं यज्ञं मिंमिक्षताम्। पिपृतां नो भरींमभिः॥ तद्विष्णोंः परमं पदᳫ सदां पश्यन्ति सूरयंः। दिवीव चक्षुरातंतम्॥ ध्रुवाऽसिं पृथिवि सहंस्व पृतन्यतः। स्यूता देवेभिंरमृतेनागाः॥ यास्तें अग्ने सूर्ये रुचं उद्यतो दिवंमा तन्वन्तिं रश्मिभिंः। ताभिः सर्वांभी रुचे जनांय नस्कृधि॥ या वों देवाः सूर्ये रुचो गोष्वश्वेंषु या रुचंः। इन्द्रांग्नी ताभिः सर्वांभी रुचं नो धत्त बृहस्पते॥ विराड्ज्योतिंरधारयत्सम्राड्ज्योतिंरधारयत्स्वराड्ज्योतिंरधारयत्। अग्ने युक्ष्वा

हि ये तवाश्वांसो देव साधवंः । अरं वहंन्त्याशवंः ॥ युक्ष्वा हि देवहूतं माऽ॒ अश्वाँऽ॒ अग्ने रथीरिव । नि होतां पूर्व्यः संदः ॥ द्रप्सश्चंस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः । तृतीयं योनिमनुंसञ्चरंन्तं द्रप्सं जुंहोम्यनुं सप्त होत्राः ॥ अभूंदिदं विश्वंस्य भुवंनस्य वाजिंनमग्नेर्वैश्वानरस्यं च । अग्निर्ज्योतिंषा ज्योतिंष्मान्रुक्मो वर्चंसा वर्चंस्वान् ॥ ऋचे त्वां रुचे त्वा समित्स्रंवन्ति सरितो न धेनाः । अन्तर्हृदा मनंसा पूयमांनाः ॥ घृतस्य धारां अभिचांकशीमि । हिरण्ययोंवेतसो मध्यं आसाम् ॥ तस्मिंन्त्सुपर्णो मंधुकृत्कुंलायी भजंन्नास्ते मधुं देवतांभ्यः । तस्यांसते हरंयः सप्त तीरें स्वधां दुहांना अमृतंस्य धाराम् ॥

[1]इयमेव सा या प्रंथमा व्यौच्छंदन्तरस्यां चंरति प्रविंष्टा । वधूर्जंजान नवगज्जनिंत्री त्रयं एनां महिमानंः सचन्ते ॥ छन्दंस्वती उषसा पेपिंशाने समानं योनिमनुंसञ्चरंन्ती । सूर्यपत्नी विचंरतः प्रजानती केतुं कृण्वाने अजरे भूरिंरेतसा ॥ ऋतस्य पन्थामनुं तिस्र आगुस्त्रयो घर्मासो अनु ज्योतिषाऽऽगुंः । प्रजामेका रक्षत्यूर्जमेका व्रतमेका रक्षति देवयूनाम् ॥ चतुष्टोमो अंभवद्या तुरीया यज्ञस्यं पक्षावृंषयो भवंन्ती । गायत्रीं त्रिष्टुभं जगंतीमनुष्टुभं बृहदर्कं युंञ्जानाः सुवराभंरन्निदम् ॥ पञ्चभिंर्धाता वि दंधाविदं यत्तासा॒ऽ॒ स्वसृंरजनयत्पञ्चं पञ्च । तासांमु यन्ति प्रयवेण पञ्च नानां रूपाणि क्रतंवो वसांनाः ॥ त्रिऽ॒शत्स्वसांर उपंयन्ति निष्कृतऽ॒ संमानं केतुं प्रति

---

मुञ्चमाना। ऋतू२ स्तन्वते कवयः प्रजानतीर्मध्ये छन्दसः परियन्ति भास्वतीः॥ ज्योतिष्मती प्रति मुञ्चते नभो रात्री देवी सूर्यस्य व्रतानि। वि पश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे॥ एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम्। तेन दस्यून्व्यसहन्त देवा हन्तासुराणामभवच्छचीभिः॥ अनानुजामनुजां मामकर्त सत्यं वदन्त्यन्विच्छ एतत्। भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्र युक्त॥ अभून्मम सुमतौ विश्ववेदा आष्ट प्रतिष्ठामविदद्धि गाधम्। भूयासमस्य सुमतौ यथा यूयमन्या वो अन्या मतिमा प्र युक्त॥ पंच व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवोऽनु पञ्च। पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरभिलोक-मेकम्॥ ऋतस्य गर्भः प्रथमा व्यूषुष्यपामेका महिमानं बिभर्ति। सूर्यस्यैका चरति निष्कृतेषु घर्मस्यैका सवितैका नि यच्छति॥ या प्रथमा व्यौच्छत्सा धेनुरभवद्यमे। सा नः पयस्वती धुक्ष्वोत्तरामुत्तरा२ समाम्॥ शुक्रर्षभा नभसा ज्योतिषागाद्विश्वरूपा शबलीरग्निकेतुः। समानमर्थ२स्वपस्यमाना बिभ्रती जरामजर उष आऽगाः॥ ऋतूनां पत्नी प्रथमेयमागादह्नां नेत्री जनित्री प्रजानाम्। एका सती बहुधोषो व्युच्छस्यजीर्णा त्वं जरयसि सर्वमन्यत्॥

[१]छन्दश्चितं चिन्वीत पशुकामः पशवो वै छन्दा२सि पशुमानेव भवति श्येनचितं चिन्वीत सुवर्गकामः श्येनो वै वयसां पतिष्ठः श्येन एव भूत्वा सुवर्गं लोकं पतति कङ्कचितं चिन्वीत यः कामयेत शीर्षण्वानमुष्मिंल्लोके स्यामिति

---

१ तै॰सं॰ ५-४-११

शीर्षण्वानेवामुष्मिँल्लोके भवत्यलजचितं चिन्वीत चतुस्सीतं प्रतिष्ठा-कामश्चतस्रो दिशो दिक्ष्वेव प्रतितिष्ठति प्रउगचितं चिन्वीत भ्रातृव्यवान्प्र। एव भ्रातृव्यान्नुदत उभयतः प्र उगं चिन्वीत यः कामयेत प्रजातान्भ्रातृव्यान्नुदेय प्रति जनिष्यमाणानिति प्रैव जातान्भ्रातृव्यान्नुदते प्रतिजनिष्यमाणान्रथ-चक्रचितं चिन्वीत भ्रातृव्यवान् वज्रो वै रथो वज्रमेव भ्रातृव्येभ्यः प्रहरति द्रोणचितं चिन्वीतान्नकामो द्रोणे वा अन्नं भ्रियते सयोन्येवान्नमवरुन्धे समूह्यं चिन्वीत पशुकामः पशुमानेव भवति ॥ परिचाय्यं चिन्वीत ग्रामकामो ग्राम्येव भवति श्मशानचितं चिन्वीत यः कामयेत पितृलोक ऋध्नुयामिति पितृलोक एवर्ध्नोति विश्वामित्रजमदग्नी वसिष्ठेनास्पर्धेताᳪ स एता जमदग्निर्विहव्या अपश्यत्ता उपाधत्त ताभिर्वै स वसिष्ठस्येन्द्रियं वीर्यमवृङ्क्त यद्विहव्या उपदधातीन्द्रियमेव ताभिर्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्ते होतुर्धिष्णिय उपदधाति यजमानायतनं वै ॥ होता स्व एवास्मा आयतन इन्द्रियं वीर्यमवरुन्धे द्वादशोपदधाति द्वादशाक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनवरुन्धेऽष्टावष्टावन्येषु धिष्णियेषूपदधात्यष्टाशफाः पशवः पशूनेवावरुन्धे षण्मार्जालीये षड्वा ऋतव ऋतवः खलु वै देवाः पितर ऋतूनेव देवान्पितॄन्प्रीणाति ॥

[१]अग्ने उदधे या त इषुर्युवा नाम तया नो मृड तस्यास्ते नमस्तस्यास्त उपजीवन्तो भूयास्माग्ने दुध्र गह्य किᳪशिल वन्य या त इषुर्युवा नाम तया नो मृड तस्यास्ते नमस्तस्यास्त उपजीवन्तो भूयास्म पञ्च वा एतेऽग्नयो यच्चितय

उदधिरेव नाम प्रथमो दुध्रः ॥ द्वितीयो गह्वस्तृतीयः किꣳशिलश्चतुर्थो वन्यः पञ्चमस्तेभ्यो यदाहुतीर्न जुहुयादध्वर्युं च यजमानं च प्रदहेयुर्यदेता आहुतीर्जुहोति भागधेयेनैवैनाञ्छमयति नार्तिमार्छत्यध्वर्युर्न यजमानो वाङ्म आसन्नसोः प्राणोऽक्ष्योश्चक्षुः कर्णयोः श्रोत्रं बाहुवोर्बलमूरुवोरोजोऽरिष्टा विश्वान्यङ्गानि तनूः ॥ तनुवा मे सह नमस्ते अस्तु मा मा हिꣳसीरप वा एतस्मात्प्राणाः क्रामन्ति योऽग्निं चिन्वन्नधिक्रामति वाङ्म आसन्नसोः प्राण इत्याह प्राणानेवात्मन्धत्ते यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाऽऽविवेश तस्मै रुद्राय नमो अस्त्वाऽहुतिभागा वा अन्ये रुद्रा हविर्भागाः ॥ अन्ये शतरुद्रीयꣳ हुत्वा गावीधुकं चरुमेतेन यजुषा चरमायामिष्टकायां नि दध्याद्भागधेयेनैवैनꣳ शमयति तस्य त्वै शतरुद्रीयꣳ हुतमित्याहुर्यस्यैतदग्नौ क्रियत इति वसवस्त्वा रुद्रैः पुरस्तात्पान्तु पितरस्त्वा यमराजानः पितृभिर्दक्षिणतः पान्त्वादित्यास्त्वा विश्वैर्देवैः पश्चात्पान्तु द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतः पातु ॥ देवास्त्वेन्द्रज्येष्ठा वरुणराजानोऽधस्ताच्चोपरिष्टाच्च पान्तु न वा एतेन पूतो न मेध्यो न प्रोक्षितो यदेनमतः प्राचीनं प्रोक्षति यत्सञ्चितमाज्येन प्रोक्षति तेन पूतस्तेन मेध्यस्तेन प्रोक्षितः ॥

[१]त्वामग्ने वृषभं चेकितानं पुनर्युवानं जनयन्नुपागाम् । अस्थूरिणो गार्हपत्यानि सन्तु तिग्मेन नो ब्रह्मणा सꣳशिशाधि ॥ पशवो वा एते यदिष्टकाश्चित्यांचित्यामृषभमुपदधाति मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय

तस्माद्बूथे यूथ ऋषभः। संवत्सरस्यं प्रतिमां यान्त्वां रात्र्युपासंते। प्रजा॰ सुवीरां कृत्वा विश्वमायुर्व्यश्नवत्। प्राजापत्याम्॥ एतामुपंदधातीयं वावैषैकाष्टका यदेवैकाष्टकायामन्नं क्रियते तदेवै तयावंरुन्ध एषा वै प्रजापतेः कामदुघा तयैव यजमानोऽमुष्मिंल्लोकेऽग्निं दुहे येनं देवा ज्योतिषोर्ध्वा उदायन् येनाऽऽदित्या वसंवो येनं रुद्राः। येनाङ्गिरसो महिमानंमानशुस्तेनैतु यजमानः स्वस्ति। सुवर्गाय वा एष लोकायं॥ चीयते यदग्निर्येनं देवा ज्योतिषोर्ध्वा उदायन्नित्युख्य॰ समिन्ध इष्टका एवैता उपं धत्ते वानस्पत्याः सुवर्गस्यं लोकस्य समंष्ट्यै शतायुंधाय शतवीर्याय शतोतंयेऽभिमातिषाहें। शतं यो नंः शरदो अजींतानिन्द्रौ नेषदतिं दुरितानि विश्वां। ये चत्वारंः पथयो देवयानां अन्तरा द्यावांपृथिवी वियन्ति। तेषां यो अज्यांनिमजींतिमावहात्तस्मैं नो देवाः॥ परिंदत्तेह सर्वें। ग्रीष्मो हेमन्त उत नौ वसन्तः शरद्वर्षाः सुंवितन्नौ अस्तु। तेषांमृतूना॰ शतशारदानां निवात एषामभंये स्याम। इदुवत्सरायं परिवत्सरायं संवत्सरायं कृणुता बृहन्नमंः। तेषां वय॰ सुमतौ यज्ञियांनां ज्योगजीता अहंताः स्याम। भद्रां नः श्रेयः समंनैष्ट देवास्त्वयाऽवसेन समंशीमहि त्वा। स नौ मयोभूः पितो आ विंशस्व शं तोकायं तनुवें स्योनः॥ अज्यांनीरेता उपंदधात्येता वै देवता अपंराजितास्ता एव प्रविंशति नैव जीयते ब्रह्मवादिनो वदन्ति यदंर्धमासा मासां ऋतवंः संवत्सर ओषंधीः पचंत्यथ कस्मांदन्याभ्यो देवतांभ्य आग्रयणं निरुप्यत इत्येता हि तद्देवतां उदजंयन् यदृतुभ्यो निर्वपेंद्देवतांभ्यः समदं दध्यादाग्रयणं निरुप्यैता आहुंतीर्जुहो-

त्यर्धमासानेव मासांनृतून्त्संवत्सरं प्रींणाति न देवताभ्यः समदन्दधाति भद्रां नः श्रेयः समनैष्ट देवा इत्याह हुताद्याय यजमानस्यापराभावाय ॥

[१]शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा उपरवा हविर्धाने खायन्ते तस्माच्छीर्षन्प्राणा अधस्तात्खायन्ते तस्मादधस्ताच्छीर्ष्णः प्राणा रक्षोहणो वलगहनो वैष्णवान्खनामीत्याह वैष्णवा हि देवतयोपरवा असुरा वै निर्यन्तो देवानां प्राणेषु वलगान्यखनन्तान्बाहुमात्रेऽन्वविन्दन्तस्माद्बाहुमात्राः खायन्त इदमहं तं वलगमुद्वपामि ॥ यन्नः समानो यमसमानो निचखानेत्याह द्वौ वाव पुरुषौ यश्चैव समानो यश्चासमानो यमेवास्मै तौ वलगं निखनतस्तमेवोद्वपति सन्तृणत्ति तस्मात्सन्तृण्णा अन्तरतः प्राणा न सम्भिनत्ति तस्मादसम्भिन्नाः प्राणा अपोऽवनयति तस्मादार्द्रा अन्तरतः प्राणा यवमतीरवनयति ॥ ऊर्ग्वै यवः प्राणा उपरवाः प्राणेष्वेवोर्जं दधाति बर्हिरवस्तृणाति तस्माल्लोमशा अन्तरतः प्राणा आज्येन व्याघारयति तेजो वा आज्यं प्राणा उपरवाः प्राणेष्वेव तेजो दधाति हनू वा एते यज्ञस्य यदधिषवणे न सन्तृणत्त्यसन्तृण्णे हि हनू अथो खलु दीर्घसोमे सन्तृद्ये धृत्यै शिरो वा एतद्यज्ञस्य यद्धविर्धानम् ॥ प्राणा उपरवा हनू अधिषवणे जिह्वा चर्म ग्रावाणो दन्ता मुखमाहवनीयो नासिकोत्तरवेदिरुदरꣳ सदो यदा खलु वै जिह्वया दत्स्वधि खादत्यथ मुखं गच्छति यदा मुखं गच्छत्यथोदरं गच्छति तस्माद्धविर्धाने चर्मन्नधि ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति यो

---

१ तैसं ६-२-११

वै विराजो यज्ञमुखे दोहं वेदं दुह एवैनामियं वै विराट्तस्यै त्वक्चर्मोऽधोधिषवंणे स्तना उपरवा ग्रावाणो वत्सा ऋत्विजो दुहन्ति सोमः पयो य एवं वेदं दुह एवैनाम् ॥

[१]असावादित्योऽस्मिंल्लोक आसीत्तं देवाः पृष्ठैः परिगृह्य सुवर्गं लोकमगमयन्परैरवस्तात्पर्यगृह्णन्दिवाकीर्त्येन सुवर्गे लोके पत्यस्थापयन्परैः परस्तात्पर्यगृह्णन्पृष्ठैरुपावारोहन्त्स वा असावादित्योऽमुष्मिंल्लोके परैरुभयतः परिगृहीतो यत्पृष्ठानि भवन्ति सुवर्गमेव तैर्लोकं यजमाना यन्ति परैरवस्तात्परिगृह्णन्ति दिवाकीर्त्येन ॥ सुवर्गे लोके प्रतितिष्ठन्ति परैः परस्तात्परिगृह्णन्ति पृष्ठैरुपावरोहन्ति यत्परे परस्तान्नस्युः पराञ्चः सुवर्गाल्लोकान्निष्पद्येरन् यदवस्तान्न स्युः प्रजा निर्दहेयुरभितो दिवाकीर्त्यं परस्समानो भवन्ति सुवर्ग एवैनाँ लोक उभयतः परिगृह्णन्ति यजमाना वै दिवाकीर्त्यꣳ संवत्सरः परस्सामानोऽभितो दिवाकीर्त्यं परस्समानो भवन्ति संवत्सर एवोभयतः ॥ प्रतितिष्ठन्ति पृष्ठं वै दिवाकीर्त्यं पार्श्वे परस्सामानोऽभितो दिवाकीर्त्यं परस्सामानो भवन्ति तस्मादभितः पृष्ठं पार्श्वे भूयिष्ठा ग्रहा गृह्यन्ते भूयिष्ठꣳ शस्यते यज्ञस्यैव तन्मध्यतो ग्रन्थिं ग्रथ्नन्त्यविस्रꣳसाय सप्त गृह्यन्ते सप्त वैशीर्षण्याः प्राणाः प्राणानेव यजमानेषु दधति यत्पराचीनानि पृष्ठानि भवन्त्यमुमेव तैर्लोकमभ्यारोहन्ति यदिमंल्लोकं न ॥ प्रत्यवरोहेयुरुद्वा माद्येयुर्यजमानाः प्र वा मीयेरन्

यत्प्रतीचीनानि पृष्ठानि भवन्तीममेव तैर्लोकं प्रत्यवरोहन्त्यथो अस्मिन्नेव लोके प्रतितिष्ठन्त्यनुन्मादायेन्द्रो वा अप्रतिष्ठित आसीत्स प्रजापतिमुपाधावत्तस्मा एतमेकविꣳशतिरात्रं प्रायच्छत्तमाहरत्तेनायजत ततो वै स प्रत्यतिष्ठद्ये बहुयाजिनोऽप्रतिष्ठिताः ॥ स्युस्त एकविꣳशतिरात्रमासीरन्द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳश एतावन्तो वै देवलोकास्तेष्वेव यथापूर्वं प्रतितिष्ठन्त्यसावादित्यो न व्यरोचत स प्रजापतिमुपाधावत्तस्मा एतमेकविꣳशतिरात्रं प्रायच्छत्तमाहरत्तेनायजत ततो वै सोऽरोचत य एवं विद्वाꣳस एकविꣳशतिरात्रमासते रोचन्त एवैकविꣳशतिरात्रो भवति रुग्वा एकविꣳशो रुचमेव गच्छन्त्यथो प्रतिष्ठामेव प्रतिष्ठा ह्येकविꣳशोऽतिरात्राविभितो भवतो ब्रह्मवर्चसस्य परिगृहीत्यै ॥

[1]सन्ततिर्वा एते ग्रहाः । यत्परस्सामानः । विषूवान्दिवाकीर्त्यम् । यथा शालायै पक्षसी । एवꣳ संवत्सरस्य पक्षसी । यदेतेन गृह्येरन् । विषूची संवत्सरस्य पक्षसी व्यवस्रꣳसेयाताम् । आर्तिमार्छेयुः । यदेते गृह्यन्ते । यथा शालायै पक्षसी मध्यमं वꣳशमभि समायच्छति ॥ एवꣳ संवत्सरस्य पक्षसी दिवाकीर्त्यमभि सन्तन्वन्ति । नार्तिमार्छन्ति । एकविꣳशमहर्भवति । शुक्राग्रा ग्रहा गृह्यन्ते । प्रत्युत्तब्ध्यै सयत्वाय । सौर्यं एतदहः पशुरालभ्यते । सौर्योऽतिग्राह्यो गृह्यते । अहरेव रूपेण समर्धयन्ति । अथो अह्न एवैष बलिर्ह्रियते । सप्तैतदहरतिग्राह्या गृह्यन्ते ॥

सप्त वै शीर्षण्याः प्राणाः । असावादित्यः शिरः प्रजानाम् । शीर्षन्नेव प्रजानां प्राणान्दधाति । तस्मात्सप्त शीर्षन्प्राणाः । इन्द्रो वृत्रꣳ हत्वा । असुरान्पराभाव्य । स इमाँल्लोकानभ्यजयत् । तस्याऽसौ लोकोऽनभिजित आसीत् । तं विश्वकर्मा भूत्वाऽभ्यजयत् । यद्वैश्वकर्मणो गृह्यते । सुवर्गस्य लोकस्याभिजित्यै । प्र वा एतेऽस्माल्लोकाच्च्यवन्ते । ये वैश्वकर्मणं गृह्णते । अदित्यश्चो गृह्यते । इयं वा अदितिः । अस्यामेव प्रतितिष्ठन्ति । अन्योऽन्यो गृह्येते । विश्वान्येवान्येन कर्माणि कुर्वाणा यन्ति । अस्यामन्येन प्रतितिष्ठन्ति । ता वाऽऽपराधात्संवत्सरस्यान्योऽन्यो गृह्येते । तावुभौ सह महाव्रते गृह्येते । यज्ञस्यैवान्तं गत्वा । उभयोर्लोकयोः प्रति तिष्ठन्ति । अर्क्यमुक्थं भवति । अन्नाद्यस्यावरुध्यै ॥

[१]एकविꣳश एष भवति । एतेन वै देवा एकविꣳशेन । आदित्यमित उत्तमꣳ सुवर्गं लोकमारोहयन् । स वा एष इत एकविꣳशः । तस्य दशावस्तादहानि । दश परस्तात् । स वा एष विराज्युभयतः प्रतिष्ठितः । विराजि हि वा एष उभयतः प्रतिष्ठितः । तस्मादन्तरेमौ लोकौ यन् । सर्वेषु सुवर्गेषु लोकेष्वभितपन्नेति । देवा वा आदित्यस्य सुवर्गस्य लोकस्य । पराचोऽतिपादादबिभयुः । तं छन्दोभिरदृꣳहन्धृत्यै । देवा वा आदित्यस्य सुवर्गस्य लोकस्य । अवाचोऽवपादादबिभयुः । तं पञ्चभी रश्मिभिरुदवयन् । तस्मादेकविꣳशेऽहन्पञ्च दिवाकीर्त्यानि क्रियन्ते । रश्मयो वै दिवाकीर्त्यानि । ये गायत्रे । ते गायत्रीषूत्तरयोः पवमानयोः । महादिवाकीर्त्यꣳ होतुः पृष्ठम् ।

विकर्णं ब्रंह्मसामम्। भासोंऽग्निष्टोमः। अथैतानि परांणि। परैर्वै देवा आंदित्यꣳ सुंवर्गं लोकमंपारयन्न्। यदपांरयन्न्। तत्परांणां परत्वम्। पारयंन्त्येनं परांणि। य एवं वेदं। अथैतानि स्परांणि। स्परैर्वै देवा आंदित्यꣳ सुंवर्गं लोकमंस्पारयन्न्। यदस्पांरयन्न्। तत्स्परांणाꣳ स्परत्वम्। स्पारयंन्त्येनꣳ स्परांणि। य एवं वेदं॥

[1]इन्द्रों वृत्रꣳ हत्वा। असुंरान्पराभाव्यं। सोंऽमावास्यां प्रत्यागंच्छत्। ते पितरंः पूर्वेद्युरागंच्छन्न्। पितृन् यज्ञोंऽगच्छत्। तं देवाः पुनंरयाचन्त। तमेंभ्यो न पुनंरददुः। तेंऽब्रुवन्वरं वृणामहै। अथं वः पुनंर्दास्यामः। अस्मभ्यंमेव पूर्वेद्युः क्रियाता इतिं। तमेंभ्यः पनंरददुः। तस्मांत्पितृभ्यंः पूर्वेद्युः क्रियते। यत्पितृभ्यंः पूर्वेद्युः करोतिं। पितृभ्यं एव तद्यज्ञं निष्क्रीय यजंमानः प्रतंनुते। सोमांय पितृपीताय स्वधा नम इत्यांह। पितुरेवाधिं सोमपीथमवंरुन्धे। न हि पिता प्रमीयंमाण आहैष सोंमपीथ इतिं। इन्द्रियं वै सोंमपीथः। इन्द्रियमेव सोंमपीथमवंरुन्धे। तेनेंन्द्रियेणं द्वितीयां जायामभ्यंश्नुते। एतद्वै ब्राह्मंणं पुरा वांजश्रवसा विदामंक्रन्न्। तस्मात्ते द्वे द्वे जाये अभ्यांक्षत। य एवं वेदं। अभि द्वितीयां जायामंश्नुते। अग्नयें कव्यवाहंनाय स्वधा नम इत्यांह। य एव पिंतृणामग्निः। तं प्रीणाति। तिस्र आहुंतीर्जुहोति। त्रिर्निदंधाति। षट्त्सम्पंद्यन्ते। षड्वा ऋतवंः। ऋतूनेव प्रीणाति। तूष्णीं मेक्षंणमादंधाति। अस्तिं वा हि षष्ठ ऋतुर्न वां। देवान् वै पितृन्प्रीतान्। मनुष्यांः पितरोऽनु प्रपिंपते। तिस्र आहुंतीर्जुहोति।

---

त्रिर्निदधाति । षट्त्सम्पद्यन्ते । षड्वा ऋतवः । ऋतवः खलु वै देवाः पितरः ।
ऋतूनेव देवान्पितॄन्प्रीणाति । तान्प्रीतान् । मनुष्याः पितरोऽनु प्रपिपते ।
सकृदाच्छिन्नं बर्हिर्भवति । सकृदिव हि पितरः । त्रिर्निदधाति । तृतीये वा
इतो लोके पितरः । तानेव प्रीणाति । पराङावर्तते । ह्रीका हि पितरः ।
ओष्मणो व्यावृत उपास्ते । ऊष्मभागा हि पितरः । ब्रह्मवादिनो वदन्ति ।
प्राश्यां३ न प्राश्या३मिति । यत्प्राश्नीयात् । जन्यमन्नमद्यात् । प्रमायुकः
स्यात् । यं न प्राश्नीयात् । अहविः स्यात् । पितृभ्य आवृश्च्येत । अवघ्रेयमेव ।
तन्नेव पाशितं नेवाप्राशितम् । वीरं वा वै पितरः प्रयन्तो हरन्ति । वीरं वा
ददति । दशां छिनत्ति । हरणभागा हि पितरः । पितॄनेव निरवदयते । उत्तर
आयुषि लोम छिन्दीत । पितॄणाꣳ ह्यंतर्हि नेदीयः । नमस्करोति । नमस्कारो
हि पितॄणाम् । नमो वः पितरो रसाय । नमो वः पितरः शुष्माय । नमो वः
पितरो जीवाय । नमो वः पितरः स्वधायै । नमो वः पितरो मन्यवे । नमो वः
पितरो घोराय । पितरो नमो वः । य एतस्मिंल्लोके स्थ । युष्माꣳस्तेनु ।
येऽस्मिंल्लोके । मां तेनु । य एतस्मिंल्लोके स्थ । यूयं तेषां वसिष्ठा भूयास्त ।
येऽस्मिंल्लोके । अहं तेषां वसिष्ठो भूयासमित्याह । वसिष्ठः समानानां भवति ।
य एवं विद्वान्पितृभ्यः करोति । एष वै मनुष्याणां यज्ञः । देवानां वा इतरे
यज्ञाः । तेन वा एतत्पितृलोके चरति । यत्पितृभ्यः करोति । स ईश्वरः प्रमेतोः ।
प्राजापत्ययर्चा पुनरैति । यज्ञो वै प्रजापतिः । यज्ञेनैव सह पुनरैति । न
प्रमायुको भवति । पितृलोके वा एतद्यजमानश्चरति । यत्पितृभ्यः करोति । स
ईश्वर आर्तिमार्तोः । प्रजापतिस्त्वावैनं तत उन्नेतुमर्हतीत्याहुः ।

यत्प्राजापत्ययर्चा पुनरैति। प्रजापतिरेवैनं तत उन्नयति। नार्तिमाच्छीति यजमानः॥

पवमानः सुवर्जनः .......जातवेदा मोर्जयन्त्या पुनातु॥

[1]अग्निर्वाव संवत्सरः। आदित्यः परिवत्सरः। चन्द्रमा इदावत्सरः। वायुरनुवत्सरः। यद्वैश्वदेवेन यजते। अग्निमेव तत्संवत्सरमाप्नोति। तस्माद्वैश्वदेवेन यजमानः। संवत्सरीणा॒ स्वस्तिमाशास्त इत्याशासीत। यद्वरुणप्रघासैर्यजते। आदित्यमेव तत्परिवत्सरमाप्नोति॥ तस्माद्वरुण-प्रघासैर्यजमानः। परिवत्सरीणा॒ स्वस्तिमाशास्त इत्याशासीत। यत्साक-मेधैर्यजते। चन्द्रमसमेव तदिदावत्सरमाप्नोति। तस्मात्साकमेधैर्यजमानः। इदावत्सरीणा॒स्वस्तिमाशास्त इत्याशासीत। यत्पितृयज्ञेन यजते। देवानेव तदन्ववस्यति। अथवा अस्य वायुश्चानुवत्सरश्चाप्रीतावुच्छिंष्येते। यच्छुनासीरीयेण यजते॥ वायुमेव तदनुवत्सरमाप्नोति। तस्माच्छुनासीरीयेण यजमानः। अनुवत्सरीणा॒ स्वस्तिमाशास्त इत्याशासीत। संवत्सरं वा एष ईप्सतीत्याहुः। यश्चातुर्मास्यैर्यजत इति। एष ह त्वै संवत्सरमाप्नोति। य एवं विद्वा॒ श्चातुर्मास्यैर्यजते। विश्वेदेवाः समयजन्त। तेऽग्निमेवायजन्त। त एतंल्लोकमजयन्॥ यस्मिन्नग्निः। यद्वैश्वदेवेन यजते। एतमेव लोकं जयति। यस्मिन्नग्निः। अग्नेरेव सायुज्यमुपैति। यदा वैश्वदेवेन यजते। अथ संवत्सरस्य गृहपतिमाप्नोति। यदा संवत्सरस्य गृहपतिमाप्नोति। अथ

---

सहस्रयाजिनमाप्नोति । यदा सहस्रयाजिनमाप्नोति ॥ अथ गृहमेधिनमाप्नोति । यदा गृहमेधिनमाप्नोति । अथाग्निर्भवति । यदाऽग्निर्भवति । अथ गौर्भवति । एषा वै वैश्वदेवस्य मात्रा । एतद्वा एतेषामवमम् । अतोऽतो वा उत्तराणि श्रेयाꣳसि भवन्ति । यद्विश्वेदेवाः समयजन्त । तद्वैश्वदेवस्य वैश्वदेवत्वम् । अथादित्यो वरुणꣳ राजानं वरुणप्रघासैरयजत । स एतं लोकमजयत् । यस्मिन्नादित्यः । यद्वरुणप्रघासैर्यजते । एतमेव लोकं जयति । यस्मिन्नादित्यः । आदित्यस्यैव सायुज्यमुपैति । यदादित्यो वरुणꣳ राजानं वरुणप्रघासैरयजत । तद्वरुणप्रघासानां वरुणप्रघासत्वम् । अथ सोमो राजा छन्दाꣳसि साकमेधैरयजत ॥ स एतं लोकमजयत् । यस्मिꣳश्चन्द्रमा विभाति । यत्साकमेधैर्यजते । एतमेव लोकं जयति । यस्मिꣳश्चन्द्रमा विभाति । चन्द्रमस एव सायुज्यमुपैति । सोमो वै चन्द्रमाः । एष ह त्वै साक्षात्सोमं भक्षयति । य एवं विद्वान्त्साकमेधैर्यजते । यत्सोमश्च राजा छन्दाꣳसि च समैधन्त ॥ तत्साकमेधानाꣳ साकमेधत्वम् । अथर्तवः पितरः प्रजापतिं पितरं पितृयज्ञेनायजन्त । त एतं लोकमजयन्न् । यस्मिन्नृतवः । यत्पितृयज्ञेन यजते । एतमेव लोकं जयति । यस्मिन्नृतवः । ऋतूनामेव सायुज्यमुपैति । यदृतवः पितरः प्रजापतिं पितरं पितृयज्ञेनायजन्त । तत्पितृयज्ञस्य पितृयज्ञत्वम् ॥ अथौषधय इमं देवं त्र्यम्बकैरयजन्त प्रथेमहीति । ततो वै ता अप्रथन्त । य एवं विद्वाꣳस्त्र्यम्बकैर्यजते । प्रथते प्रजया पशुभिः । अथ वायुः परमेष्ठिनꣳ शुनासीरीयेणायजत । स एतं लोकमजयत् । यस्मिन्वायुः । यच्छुनासीरीयेण यजते । एतमेव लोकं

जयति। यस्मिन्वायुः॥ वायोरेव सायुज्यमुपैति। ब्रह्मवादिनो वदन्ति। प्र चातुर्मास्ययाजी मीयता३न प्रमीयता३ इति। जीवन्वा एष ऋतूनप्येति। यदि वसन्ता प्रमीयते। वसन्तो भवति। यदि ग्रीष्मे ग्रीष्मः। यदि वर्षासु वर्षाः। यदि शरदि शरत्। यदि हेमन् हेमन्तः। ऋतुर्भूत्वा संवत्सरमप्येति। संवत्सरः प्रजापतिः। प्रजापतिर्वावैषः॥

[१]वैश्वदेवेन वै प्रजापतिः प्रजा असृजत। ता वरुणप्रघासैर्वरुणपाशा-दमुञ्चत्। साकमेधैः प्रत्यस्थापयत्। त्र्यम्बकै रुद्रं निरवादयत। पितृयज्ञेन सुवर्गं लोकमगमयत्। यद्वैश्वदेवेन यजते। प्रजा एव तद्यजमानः सृजते। ता वरुणप्रघासैर्वरुणपाशान्मुञ्चति। साकमेधैः प्रतिष्ठापयति। त्र्यम्बकै रुद्रं निरवदयते॥ पितृयज्ञेन सुवर्गं लोकं गमयति। दक्षिणतः प्राचीनावीती निर्वपति। दक्षिणावृद्धि पितृणाम्। अनादृत्य तत्। उत्तरत एवोपवीय निर्वपेत्। उभये हि देवाश्च पितरश्चेज्यन्ते। अथो यदेव दक्षिणार्धेऽधि श्रयति। तेन दक्षिणावृत्। सोमाय पितृमते पुरोडाश षट्कपालं निर्वपति। संवत्सरो वै सोमः पितृमान्॥ संवत्सरमेव प्रीणाति। पितृभ्यो बर्हिषद्भ्यो धानाः। मासा वै पितरो बर्हिषदः। मासानेव प्रीणाति। यस्मिन्वा ऋतौ पुरुषः प्रमीयते। सोऽस्यामुष्मिँल्लोके भवति। बहुरूपा धाना भवन्ति। अहोरात्राणामभिजित्यै। पितृभ्योऽग्निष्वात्तेभ्यो मन्थम्। अर्धमासा वै पितरोऽग्निष्वात्ताः॥

---

अर्धमासानेव प्रीणाति । अभिवान्यायै दुग्धे भवति । सा हि पितृदेवत्यं दुहे । यत्पूर्णम् । तन्मनुष्याणाम् । उपर्यर्धो देवानाम् । अर्धः पितृणाम् । अर्ध उपमन्थति । अर्धो हि पितृणाम् । एकयोपमन्थति ॥ एका हि पितृणाम् । दक्षिणोपमन्थति । दक्षिणावृद्धि पितृणाम् । अनारभ्योपमन्थति । तद्धि पितॄन्गच्छति । इमां दिशं वेदिमुद्धन्ति । उभये हि देवाश्च पितरश्चेज्यन्ते । चतुःस्रक्तिर्भवति । सर्वा ह्यनु दिशः पितरः । अखाता भवति ॥ खाता हि देवानाम् । मध्यतोऽग्निराधीयते । अन्ततो हि देवानामाधीयते । वर्षीयानिध्म इध्माद्भवति व्यावृत्त्यै । परिश्रयति । अन्तर्हितो हि पितृलोको मनुष्यलोकात् । यत्परुषि दिनम् । तद्देवानाम् । यदन्तरा । तन्मनुष्याणाम् । यत्समूलम् । तत्पितृणाम् । समूलं बर्हिर्भवति व्यावृत्त्यै । दक्षिणा स्तृणाति । दक्षिणावृद्धि पितृणाम् । त्रिः पर्येति । तृतीये वा इतो लोके पितरः । तानेव प्रीणाति । त्रिः पुनः पर्येति । षट्त्सम्पद्यन्ते ॥ षड्वा ऋतवः । ऋतूनेव प्रीणाति । यत्प्रस्तरं यजुषा गृह्णीयात् । प्रमायुको यजमानः स्यात् । यं न गृह्णीयात् । अनायतनः स्यात् । तूष्णीमेव न्यस्येत् । न प्रमायुको भवति । नानायतनः । यत्त्रीन्परिधीन्परिदध्यात् ॥ मृत्युना यजमानं परि गृह्णीयात् । यं न परिदध्यात् । रक्षाꣳसि यज्ञꣳ हन्युः । द्वौ परिधी परिदधाति । रक्षसाम-पहत्यै । अथो मृत्योरेव यजमानमुत्सृजति । यत्त्रीणित्रीणि हवीꣳष्युदा-हरेयुः । त्रयस्त्रय एषाꣳ साकं प्रमीयेरन् । एकैकमनूचीनान्युदाहरन्ति । एकैक एवैषामन्वञ्चः प्रमीयते । कशिपु कशिपव्याय । उपबर्हणमुपबर्हण्याय । आञ्जनमाञ्जन्याय । अभ्यञ्जनमभ्यञ्जन्याय । यथाभागमेवैनान्प्रीणाति ॥

[1]अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीत्याह। उभये हि देवाश्च पितरश्चेज्यन्ते। एकामन्वाह। एका हि पितृणाम्। त्रिरन्वाह। त्रिर्हि देवानाम्। आघारावाघारयति। यज्ञपरुषोरनन्तरित्यै। नार्षेयं वृणीते। न होतारम्॥ यदार्षेयं वृणीत। यद्धोतारम्। प्रमायुको यजमानः स्यात्। प्रमायुको होता। तस्मान्न वृणीते। यजमानस्य होतुर्गोपीथाय। अप बर्हिषः प्रयाजान् यजति। प्रजा वै बर्हिः। प्रजा एव मृत्योरुत्सृजति। आज्यभागौ यजति॥ यज्ञस्यैव चक्षुषी नान्तरेति। प्राचीनावीती सोमं यजति। पितृदेवत्या हि। एषाऽऽहुतिः। पञ्चकृत्वोऽवद्यति। पञ्च ह्येता देवताः। द्वे पुरोऽनुवाक्ये। याज्या देवता वषट्कारः। ता एव प्रीणाति। सन्ततमवद्यति॥ ऋतूनाꣳ सन्तत्यै। प्रैभ्यः पूर्वया पुरोऽनुवाक्ययाऽऽह। प्रणयति द्वितीयया। गमयति याज्यया। तृतीये वा इतो लोके पितरः। अह्न एवैनान्पूर्वया पुरोऽनुवाक्ययाऽत्यानयति। रात्रियै द्वितीयया। एवैनान् याज्यया गमयति। दक्षिणतोऽवदाय। उदङ्ङति क्रामति व्यावृत्त्यै॥ आ स्वधेत्याश्रावयति। अस्तु स्वधेति प्रत्याश्रावयति। स्वधा नम इति वषट्करोति। स्वधाकारो हि पितृणाम्। सोममग्रे यजति। सोमप्रयाजा हि पितरः। सोमं पितृमन्तं यजति। संवत्सरो वै सोमः पितृमान्। संवत्सरमेव तद्यजति। पितॄन्बर्हिषदो यजति॥ ये वै यज्वानः। ते पितरो बर्हिषदः। तानेव तद्यजति। पितॄनग्निष्वात्तान् यजति। ये वा अयज्वानो गृहमेधिनः। ते

---

पितरोऽग्निष्वात्ताः। तानेव तद्यजति। अग्निं कव्यवाहनं यजति। य एव पितृणामग्निः। तमेव तद्यजति॥ अथो यथाऽग्निꣳ स्विष्टकृतं यजति। तादृगेव तत्। एतत्ते तत ये च त्वामन्विति तिसृषु स्रक्तीषु निदधाति। तस्मादा तृतीयात्पुरुषान्नाम न गृह्णन्ति। एतावन्तो हीज्यन्ते। अत्र पितरो यथाभागं मन्दध्वमित्याह। ह्रीका हि पितरः। उदञ्चो निष्क्रामन्ति। एषा वै मनुष्याणां दिक्। स्वामेव तद्दिशमनु निष्क्रामन्ति॥ आहवनीयमुपतिष्ठन्ते। न्येवास्मै तद्ध्नुवते। यत्सत्याहवनीये। अथान्यत्र चरन्ति। आतमितो-रुपतिष्ठन्ते। अग्निमेवोपद्रष्टारं कृत्वा। पितृन्निरवदयन्ते। अन्तं वा एते प्राणानां गच्छन्ति। य आतमितोरुपतिष्ठन्ते। सुसन्दृशंत्वा वयमित्याह॥ प्राणो वै सुसन्दृक्। प्राणमेवात्मन्दधते। योजान्विन्द्र ते हरी इत्याह। प्राणमेव पुनरयुक्त। अक्षन्नमीमदन्त हीति गार्हपत्यमुपतिष्ठन्ते। अक्षन्नमीमदन्ताथ त्वोपतिष्ठामह इति वा वैतदाह। अमीमदन्त पितरः सोम्या इत्यभि प्रपद्यन्ते। अमीमदन्त पितरोऽथ त्वाऽभि प्रपद्यामह इति वावैतदाह। अपः परिषिञ्चति। मार्जयन्त्येवैनान्॥ अथो तर्पयन्त्येव। तृप्यति प्रजया पशुभिः। य एवं वेद। अप बर्हिषावनूयाजौ यजति। प्रजा वै बर्हिः। प्रजा एव मृत्योरुत्सृजति। चतुरः प्रयाजान् यजति। द्वावनूयाजौ। षट्त्सम्पद्यन्ते। षड्वा ऋतवः॥ ऋतूनेव प्रीणाति। न पत्न्यन्वास्ते। न संयाजयन्ति। यत्पत्न्यन्वासीत। यत्संयाजयेयुः। प्रमायुका स्यात्। तस्मान्नान्वास्ते। न संयाजयन्ति। पत्नियै गोपीथाय॥

[1]सुरा॑वन्तं ब॒र्हि॒षद॑ꣳ सु॒वीर॑म्। य॒ज्ञꣳ हि॑न्वन्ति महि॒षा नमो॑भिः। दधा॑ना॒ः सोमं॑ दि॒वि दे॒वता॑सु। मदे॒मेन्द्रं॒ यज॑मानाः स्व॒र्काः। यस्ते॒ रस॒ः सम्भृ॑त॒ ओष॑धीषु। सोम॑स्य॒ शुष्म॒ः सुर॑या सु॒तस्य॑। तेन॑ जिन्व॒ यज॑मान॒ं मदे॑न। सर॑स्वतीम॒श्विना॒विन्द्र॑म॒ग्निम्। यम॒श्विना॒ नमु॑चेरासु॒रादधि॑। सर॑स्व॒त्यस॑नो-दिन्द्रि॒याय॑॥ इ॒मं तꣳ शु॒क्रं मधु॑मन्त॒मिन्दु॑म्। सोम॒ꣳ राजा॑नमि॒ह भ॑क्षयामि। यदत्र॑ रि॒प्तꣳ र॒सिन॑ः सु॒तस्य॑। यदिन्द्रो॒ अपि॑ब॒च्छची॑भिः। अ॒हं तद॑स्य॒ मन॑सा शि॒वेन॑। सोम॒ꣳ राजा॑नमि॒ह भ॑क्षयामि। पि॒तृभ्य॑ः स्वधा॒विभ्य॑ः स्व॒धा नम॑ः। पि॒ता॒म॒हेभ्य॑ः स्वधा॒विभ्य॑ः स्व॒धा नम॑ः। प्रपि॑तामहेभ्यः स्वधा॒विभ्य॑ः स्व॒धा नम॑ः। अक्ष॑न्पि॒तर॑ः॥ अमी॑मदन्त पि॒तर॑ः। अती॑तृपन्त पि॒तर॑ः। अमी॑मृजन्त पि॒तर॑ः। पित॑र॒ः शुन्ध॑ध्वम्। पु॒नन्तु॑ मा पि॒तर॑ः सो॒म्यास॑ः। पु॒नन्तु॑ मा पिता॒म॒हाः। पु॒नन्तु॒ प्रपि॑तामहाः। प॒वित्रे॑ण श॒तायु॑षा। पु॒नन्तु॑ मा पिता॒म॒हाः। पु॒नन्तु॒ प्रपि॑तामहाः। प॒वित्रे॑ण श॒तायु॑षा॥ वि॒श्व॒मायु॒र्व्य॑श्नवै। अग्न॒ आयू॑ꣳषि पव॒सेऽग्ने॒ पव॑स्व। पव॑मान॒ः सु॒वर्ज॑नः पु॒नन्तु॑ मा दे॒वज॒नाः। जात॑वेदः प॒वित्र॑व॒द्यत्ते॑ प॒वित्र॑म॒र्चिषि॑। उ॒भाभ्यां॑ देव सवित॒र्वैश्व॒दे॒वी पु॑न॒ती। ये स॑मा॒नाः सम॑नसः। पि॒तरो॑ यम॒राज्ये॑। तेषां॑ लो॒कः स्व॒धा नम॑ः। य॒ज्ञो दे॒वेषु॑ कल्पताम्॥ ये स॑ज॒ताः सम॑नसः। जी॒वा जी॒वेषु॑ माम॒काः। तेषा॒ꣳ श्रीर्मयि॑ कल्पताम्। अ॒स्मिँल्लो॒के श॒तꣳ समा॑ः। द्वे सृ॒ती अ॑शृणवं पि॒तृ॒णाम्। अ॒हं दे॒वाना॑मु॒त मर्त्या॑नाम्। याभ्या॑मि॒दं विश्व॒मेज॒त्सम॑ेति। यद॑न्तरा पि॒तरं॑ मा॒तरं॑ च। इ॒दꣳ ह॒विः प्र॒जन॑नं मे अस्तु। दश॑वीरꣳ स॒र्वग॑णꣴ स्व॒स्तये॑॥

---

१. तै.ब्रा. २-६-३.

आत्मसनिं प्रजासनिं । पशुसन्यंभयसनिं लोकसनिं । अग्निः प्रजां बंहुलां मैं करोतु । अन्नं पयो रेतौं अस्मासुं धत्त । रायस्पोषमिषमूर्जमस्मासुं दीधरत्स्वाहाँ ॥

[1]उशन्तंस्त्वा हवामह आ नौं अग्ने सुकेतुनाँ । त्वꣳ सौंम महे भगं त्वꣳ सौंम प्रचिंकितो मनीषा । त्वया हि नंः पितरंः सोम पूर्वे त्वꣳ सौंम पितृभिंः संविदानः । बर्हिषदः पितर आऽहं पितॄन् । उपंहूताः पितरोऽग्निंष्वात्ताः पितरः । अग्निष्वात्तानृंतुमतौं हवामहे । नराशꣳसें सोमपीथं य आशुः । ते नो अर्वन्तः सुहवां भवन्तु । शं नौं भवन्तु द्विपदे शं चतुंष्पदे । ये अंग्निष्वात्ता येऽनंग्निष्वात्ताः ॥ अꣳहोमुचंः पितरंः सोम्यासंः । परेऽवंरेऽमृतांसो भवंन्तः । अधिंब्रुवन्तु ते अंवन्त्वस्मान् । वान्यांयै दुग्धे जुषमांणाः करम्भम् । उदीरांणा अवरे परे च । अग्निष्वात्ता ऋतुभिंः संविदानाः । इन्द्रंवन्तो हविरिदं जुंषन्ताम् । यदंग्ने कव्यवाहन त्वमंग्न ईडितो जांतवेदः । मातंली कव्यैः । ये तांतृपुर्देवत्रा जेहंमानाः । होत्रावृधस्तोमंतष्टासो अर्कैः । आऽग्ने याहि सुविदत्रेभिरर्वाङ् । सत्यैः कव्यैः पितृभिर्घर्मसद्भिः । हव्यवाहंमजरं पुरुप्रियम् । अग्निं घृतेनं हविषां सपर्यन्न् । उपांसदं कव्यवाहं पितृणाम् । स नंः प्रजां वीरवंतीꣳ समृंण्वतु ॥

[2]अयं वाव यः पवंते । सौंऽग्निर्नाचिकेतः । स यत्प्राङ्पवंते । तदंस्य शिरंः । अथ यद्दंक्षिणा । स दक्षिंणः पक्षः । अथ यत्प्रत्यक् । तत्पुच्छंम् ।

यदुदङ्ङ् । स उत्तरः पक्षः ॥ अथ यत्संवाति । तदस्य समञ्चनं च प्रसारणं च । अथो सम्पदेवास्य सा । सꣳह वा अस्मै सकामः पद्यते । यत्कामो यजते । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद । यो ह वा अग्नेर्नाचिकेतस्यायतनं प्रतिष्ठां वेद । आयतनवान्भवति । गच्छति प्रतिष्ठाम् ॥ हिरण्यं वा अग्नेर्नाचिकेतस्यायतनं प्रतिष्ठा । य एवं वेद । आयतनवान्भवति । गच्छति प्रतिष्ठाम् । यो ह वा अग्नेर्नाचिकेतस्य शरीरं वेद । सशरीर एव स्वर्गं लोकमेति । हिरण्यं वा अग्नेर्नाचिकेतस्य शरीरम् । य एवं वेद । सशरीर एव स्वर्गं लोकमेति । अथो यथा रुक्म उत्तप्तो भायात् ॥ एवमेव स तेजसा यशसा । अस्मिꣳश्च लोकेऽमुष्मिꣳश्च भाति । उरवो ह वै नामैते लोकाः । येऽवरेणाऽदित्यम् । अथ हैते वरीयाꣳसो लोकाः । ये परेणादित्यम् । अन्तवन्तꣳ ह वा एष क्षय्यं लोकं जयति । योऽवरेणादित्यम् । अथ हैषोऽनन्तमपारमक्षय्यं लोकं जयति । यः परेणादित्यम् ॥ अनन्तꣳ ह वा अपारमक्षय्यं लोकं जयति । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद । अथो यथा रथे तिष्ठन्पक्षसी पर्यावर्तमाने प्रत्यपेक्षते । एवमहोरात्रे प्रत्यपेक्षते । नास्याहोरात्रे लोकमाप्नुतः । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद ॥

[1]तꣳ हैतमेके पशुबन्ध एवोत्तरवेद्यां चिन्वते । उत्तरवेदिसम्मित एषोऽग्निरिति वदन्तः । तन्न तथा कुर्यात् । एतमग्निं कामेन व्यर्धयेत् । स एनं कामेन व्यृद्धः । कामेन व्यर्द्धयेत् । सौम्ये वावैनमध्वरे चिन्वीत । यत्र वा

भूयिष्ठा आहुतयो हूयेरन्न्। एतमग्निं कामेन समर्धयति। स एनं कामेन समृद्धः॥ कामेन समर्धयति। अथ हैनं पुरुरवसः। उत्तरवेद्यामेव सत्रियमचिन्वत। ततो वै तेऽविन्दन्त प्रजाम्। अभिस्वर्गं लोकमजयन्न्। विन्दते एव प्रजाम्। अभि स्वर्गं लोकं जयति। योऽग्निं नाचिकेतं चिनुते। य उ चैनमेवं वेद। अथ हैनं वायुर् ऋद्धिकामः॥ यथान्युप्तमेवोपदधे। ततो वै स एतामृद्धिमार्ध्नोत्। यामिदं वायुर् ऋद्धः। एतामृद्धिमृध्नोति। यामिदं वायुर् ऋद्धः। योऽग्निं नाचिकेतं चिनुते। य उ चैनमेवं वेद। अथ हैनं गोबलो वार्ष्णः पशुकामः। पाङ्क्तमेव चिक्ये। पञ्च पुरस्तात्॥ पञ्च दक्षिणतः। पञ्च पश्चात्। पञ्चोत्तरतः। एकां मध्ये। ततो वै स सहस्रं पशून्प्राप्नोत्। प्र सहस्रं पशूनाप्नोति। योऽग्निं नाचिकेतं चिनुते। य उ चैनमेवं वेद। अथ हैनं प्रजापतिर्ज्यैष्ठ्यकामो यशस्कामः प्रजननकामः। त्रिवृतमेव चिक्ये॥ सप्त पुरस्तात्। तिस्रो दक्षिणतः। सप्त पश्चात्। तिस्र उत्तरतः। एकां मध्ये। ततो वै स प्र यशो ज्यैष्ठ्यमाप्नोत्। एतां प्रजातिं प्राजायत। यामिदं प्रजाः प्रजायन्ते। त्रिवृद्वै ज्यैष्ठ्यम्। माता पिता पुत्रः॥ त्रिवृत्प्रजननम्। उपस्थो योनिर्मध्यमा। प्र यशो ज्यैष्ठ्यमाप्नोति। एतां प्रजातिं प्रजायते। यामिदं प्रजाः प्रजायन्ते। योऽग्निं नाचिकेतं चिनुते। य उ चैनमेवं वेद। अथ हैनमिन्द्रो ज्यैष्ठ्यकामः। ऊर्ध्वा एवोपदधे। ततो वै स ज्यैष्ठ्यमगच्छत्॥ ज्यैष्ठ्यं गच्छति। योऽग्निं नाचिकेतं चिनुते। य उ चैनमेवं वेद। अथ हैनमसावादित्यः स्वर्गकामः। प्राचीरेवोपदधे। ततो वै सोऽभि स्वर्गं लोकमजयत्। अभि स्वर्गं लोकं जयति। योऽग्निं नाचिकेतं चिनुते। य उ

चैनमेवं वेदं। स यदीच्छेत्॥ तेजस्वी यशस्वी ब्रह्मवर्चसी स्यामिति। प्राङाहोतुर्धिष्ण्यादुत्सर्पयेत्। येयं प्रागाद्यशस्वती। सा मा प्रोर्णोतु। तेजसा यशसा ब्रह्मवर्चसेनेति। तेजस्व्येव यशस्वी ब्रह्मवर्चसी भवति। अथ यदीच्छेत्। भूयिष्ठं मे श्रद्दधीरन्। भूयिष्ठा दक्षिणा नयेयुरिति। दक्षिणासु नीयमानासु प्राच्येहि प्राच्येहीति प्राची जुषाणा वेत्वाज्यस्य स्वाहेति स्रुवेणोपहत्याहवनीये जुहुयात्॥ भूयिष्ठमेवास्मै श्रद्दधते। भयिष्ठा दक्षिणा नयन्ति। पुरीषमुपधाय। चितिक्लृप्तिभिरभिमृश्य। अग्निं प्रणीयोपसमाधाय। चतस्र एता आहुतीर्जुहोति। त्वमग्ने रुद्र इति शतरुद्रीयस्य रूपम्। अग्नाविष्णू इति वसोर्धारायाः। अन्नपत इत्यन्नहोमः। सप्त ते अग्ने समिधः सप्त जिह्वा इति विश्वप्रीः॥

यां प्रथमामिष्टकामुपदधाति। इमं तया लोकमभि जयति। अथो या अस्मिंल्लोके देवताः। तासा९ सायुज्य९ सलोकतामाप्नोति। यां द्वितीयामुपदधाति। अन्तरिक्षलोकं तयाऽभिजयति। अथो या अन्तरिक्षलोके देवताः। तासा९ सायुज्य९ सलोकतामाप्नोति। यां तृतीयामुपदधाति। अमुं तया लोकमभिजयति॥ अथो या अमुष्मिँल्लोके देवताः। तासा९ सायुज्य९ सलोकतामाप्नोति। अथो या अमूरितरा अष्टादश। य एवामी उरवश्च वरीया९सश्च लोकाः। तानेव ताभिरभिजयति। कामचारो ह वा अस्योरुषु च वरीयस्सु च लोकेषु भवति। योऽग्निं नाचिकेतं चिनुते। य उ चैनमेवं वेद। सव्वँत्सरो वा अग्निर्नाचिकेतः। तस्य वसन्तः शिरः॥ ग्रीष्मो दक्षिणः पक्षः। वर्षा उत्तरः। शरत्पुच्छम्। मासाः कर्मकाराः। अहोरात्रे शतरुद्रीयम्।

पुर्जन्यो वसोर्धारां। यथा वै पुर्जन्यः सुवृष्टं वृष्ट्वा। प्रजाभ्यः सर्वान्कामाँन्त्सम्पूरयंति। एवमेव स तस्य सर्वान्कामान्त्सम्पूरयति। योँऽग्निं नांचिकेतं चिंनुते॥ य उं चैनमेवं वेदं। संवत्सरो वा अग्निर्नाचिकेतः। तस्यं वसन्तः शिरंः। ग्रीष्मो दक्षिंणः पक्षः। वर्षाः पुच्छंम्। शरदुत्तंरः पक्षः। हेमन्तो मध्यंम्। पूर्वपक्षाश्चितंयः। अपरपक्षाः पुरीषम्। अहोरात्राणीष्टंकाः। एष वाव सोँऽग्निरंग्निमयंः पुनर्णवः। अग्निमयो ह वै पुंनर्णवो भूत्वा। स्वर्गं लोकमेंति। आदित्यस्य सायुंज्यम्। योँऽग्निं नांचिकेतं चिंनुते। य उंचैनमेवं वेदं॥

[1]ऋचां प्राचीं महती दिगुंच्यते। दक्षिंणामाहुर्यजुंषामपाराम्। अथर्वणा-मङ्गिंरसां प्रतीचीं। साम्नामुदींची महती दिगुंच्यते। ऋग्भिः पूर्वाह्णे दिवि देव ईयते। यजुर्वेदे तिंष्ठति मध्ये अह्नः। सामवेदेनाँस्तमये महीयते। वेदैरशूँन्यस्त्रिभिरेंति सूर्यः। ऋग्भ्यो जाता२ सर्वशो मूर्तिमाहुः। सर्वा गतिर्याजुषी हैव शश्वंत्॥ सर्वं तेजः सामरूप्य२ हं शश्वत्। सर्व२ हेदं ब्रह्मंणा हैव सृष्टम्। ऋग्भ्यो जातं वैश्यं वर्णमाहुः। यजुर्वेदं क्षंत्रियस्याहु-र्योनिंम्। सामवेदो ब्राँह्मणानां प्रसूंतिः। पूर्वे पूर्वेभ्यो वचं एतदूंचुः। आदर्शमग्निं चिंन्वानाः। पूर्वे विश्वसृजोऽमृताः। शतं वर्षसहस्राणिं। दीक्षिताः सत्रमांसत॥ तपं आसीद्गृहपंतिः। ब्रह्म ब्रह्माऽभंवत्स्वयम्। सत्य२ ह होतैषामासींत्। यद्विश्वसृज आसंत। अमृतमेभ्य उदंगायत्। सहस्रं

परिवत्सरान्। भूत९ हं प्रस्तोतैषामासींत्। भविष्यत्प्रतिंचाहरत्। प्राणो अंध्वर्युरंभवत्। इदं९ सर्व९ सिषांसताम्॥ अपानो विद्वानावृतः। प्रति प्रातिंष्ठदध्वरे। आर्तवा उंपगातारः। सदस्यां ऋतवोंऽभवन्। अर्धमासाश्च मासाश्च। चमसाध्वर्यवोऽभंवन्। अशं९सद्ब्रह्मंणस्तेजः। अच्छावा-कोऽभंवद्यशः। ऋतमेंषां प्रशास्ताऽऽसींत्। यद्विश्वसृज आसंत॥ ऊर्ग्राजांनमुदंवहत्। ध्रुवगोपः सहोंऽभवत्। ओजोऽभ्यंष्टौद्वावण्णंः। यद्विश्वसृज आसंत। अपंचितिः पोत्रीयांमयजत्। नेष्ट्रीयांमयजत्त्विषिः। आग्नींध्राद्विदुषी सत्यम्। श्रद्धा हैवायंजत्स्वयम्। इरा पत्नी विश्वसृजांम्। आकूंतिरपिनद्धविः॥ इध्म९ ह क्षुच्चौंम्य उग्रे। तृष्णा चावंहतामुभे। वागेंषा९ सुब्रह्मण्याऽऽसींत्। छन्दोयोगान् विंजानती। कल्पतन्त्राणिं तन्वानाऽहंः। स९स्थाश्चं सर्वशः। अहोरात्रे पंशुपाल्यौ। मुहूर्ताः प्रेष्यां अभवन्। मृत्युस्तदंभवद्धाता। शमितोग्रो विशां पतिः॥ विश्वसृजः प्रथमाः सत्रमांसत। सहस्रंसमं प्रसुंतेन यन्तंः। ततों ह जज्ञे भुवंनस्य गोपाः। हिरण्मयः शकुनिर्ब्रह्मनामं। येन सूर्यस्तपंति तेजंसेद्धः। पिता पुत्रेणं पितृमान् योनिंयोनौ। नावेंदविन्मनुते तं बृहन्तंम्। सर्वानुभूमात्मानं९ सम्पराये। एष नित्यो मंहिमा ब्राह्मणस्यं। न कर्मंणा वर्धते नो कनीयान्॥ तस्यैवात्मा पंदवित्तं विंदित्वा। न कर्मंणा लिप्यते पापंकेन। पञ्चंपञ्चाशतंस्त्रिवृतः संवत्सराः। पञ्चंपञ्चाशतंः पञ्चदशाः। पञ्चंपञ्चाशतंः सप्तदशाः। पञ्चंपञ्चाशतं एकवि९शाः। विश्वसृजां९ सहस्रंसंवत्सरम्। एतेन वै विंश्वसृजं इदं विश्वंमसृजन्त। यद्विश्वमसृंजन्त। तस्मांद्विश्वसृजंः॥ विश्वंमेनाननु प्रजांयते।

ब्रह्मणः सायुंज्य९ सलोकतां यन्ति। एतासामेव देवतांना९ सायुंज्यम्। सार्ष्टितां९ समानलोकतां यन्ति। य एतदुपयन्ति। ये चैनत्प्राहुः। येभ्यश्चैनत्प्राहुः ॥ ओम् ॥

सहस्रंशीर्षा पुरुषः ०सन्ति देवाः ॥ अद्भ्यः सम्भूतः पृथिव्यै० सर्वं मनिषाण ॥

तच्छंयोरावृंणीमहे। गातुं यज्ञायं। गातुं यज्ञपंतये। दैवीं स्वस्तिरंस्तु नः। स्वस्तिर्मानुंषेभ्यः। ऊर्ध्वं जिंगातु भेषजम्। शं नो अस्तु द्विपदे। शं चतुंष्पदे ॥ ॐ शान्तिः शान्तिः शान्तिः ॥



ॐ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमꣳ श्रथाय । अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ अस्तभ्नाद्द्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्या आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि । यत्किञ्चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याँश्चरामसि । अचित्ती यत्तव धर्मा युयोपिम मानस्तस्मादेनसो देव रीरिषः ॥ कितवासो यद्रिरिपुर्न दीवि यद्वा घासत्यमुत यन्न विद्म । सर्वाताविष्यंशिथिरेव देवाथा ते स्याम वरुण प्रियासः ॥ अव ते हेडो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः । क्षयन्नस्मभ्यमसुरप्रचेतो राजन्नेनाꣳसि शिश्रथः कृतानि ॥ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्रमोषीः ॥

ॐ हिरण्यवर्णाश्शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । अग्निं या गर्भं दधिरे विरूपास्ता न आपश्शꣳस्योना भवन्तु ॥ यासाꣳ राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् । मधुश्चुतश्शुचयो याः पावकास्ता न आपश्शꣳस्योना भवन्तु ॥ यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति । याः पृथिवीं पयसोन्दन्ति शुक्रास्ता न आपश्शꣳस्योना भवन्तु ॥ शिवेन मा चक्षुषा पश्यतापः शिवया तनुवोपस्पृशत त्वचं मे । सर्वाꣳ अग्नीꣳ रप्सुषदो हुवे वो मयि वर्चो बलमोजो निधत्त ॥

ॐ पवमानः सुवर्जनः...... जातवेदा मोर्जयन्त्या पुनातु ॥

ॐ तच्छंयोरावृणीमहे.......शं चतुष्पदे ॥

[1]ॐ मित्रोऽसि वरुणोऽसि। समहं विश्वैर्देवैः। क्षत्रस्य नाभिरसि। क्षत्रस्य योनिरसि। स्योनामाऽऽसीद। सुषदा माऽऽसीद। मा त्वां हिꣳसीत्। मा मां हिꣳसीत्। निषसाद धृतव्रतो वरुणः। पस्त्यास्वा। साम्राज्याय सुक्रतुः॥ देवस्य त्वा सवितुः प्रसवे। अश्विनोर्बाहुभ्याम्। पूष्णो हस्ताभ्याम्। अश्विनोर्भैषज्येन। तेजसे ब्रह्मवर्चसायाभिषिञ्चामि॥ देवस्य त्वा सवितुः प्रसवे। अश्विनोर्बाहुभ्याम्। पूष्णो हस्ताभ्याम्। सरस्वत्यै भैषज्येन। वीर्यायान्नाद्याया भिषिञ्चामि॥ देवस्य त्वा सवितुः प्रसवे। अश्विनोर्बाहुभ्याम्। पूष्णो हस्ताभ्याम्। इन्द्रस्येन्द्रियेण। श्रियै यशसे बलायाभिषिञ्चामि॥

[2]अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय। वाचं विष्णुꣳ सरस्वतीꣳ सवितारं च वाजिनम्॥ सोमꣳ राजा नं वरुणमग्निमन्वारभामहे। आदित्यान् विष्णुꣳ सूर्यं ब्रह्माणं च बृहस्पतिम्॥ देवस्य त्वा सवितुः प्रसवेऽ-श्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेस्त्वा साम्राज्येनाभिषिञ्चामीन्द्रस्य बृहस्पतेस्त्वा साम्म्राज्येनाभि षिञ्चामि॥

[3]देवास्त्वेन्द्रज्येष्ठा वरुणराजानोऽधस्ताच्चोपरिष्टाच्च पान्तु न वा एतेन

पूतो न मेध्यो न प्रोक्षितो यदेनमतः प्राचीनं प्रोक्षति यत्सञ्चितमाज्येन प्रोक्षति तेनं पूतस्तेन मेध्यस्तेन प्रोक्षितः ॥

[१]वसवस्त्वा पुरस्तादभिषिञ्चन्तु गायत्रेण छन्दसा। रुद्रास्त्वा दक्षिणतोऽभिषिञ्चन्तु त्रैष्टुभेन छन्दसा। आदित्यास्त्वा पश्चादभिषिञ्चन्तु जागतेन छन्दसा। विश्वे त्वा देवा उत्तरतोऽभिषिञ्चन्त्वानुष्टुभेन छन्दसा। बृहस्पतिस्त्वोपरिष्टादभिषिञ्चतु पाङ्क्तेन छन्दसा ॥

[२]इमा रुद्राय स्थिरधन्वने गिरः। क्षिप्रेषवे देवाय स्वधाम्ने। अषाढाय सहमानाय मीढुषे। तिग्मायुधाय भरता शृणोतन ॥ त्वादत्तेभी रुद्र शन्तमेभिः। शतꣳ हिमा अशीय भेषजेभिः। व्यस्मद्द्वेषो वितरं व्यꣳहः। व्यमीवाꣳश्चातयस्वा विषूचीः ॥ अर्हन्बिभर्षि सायकानि धन्व। अर्हन्निष्कं यजतं विश्वरूपम्। अर्हन्निदं दयसे विश्वमब्भुवम्। न वा ओजीयो रुद्र त्वदस्ति ॥ मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। वीरान्मा नो रुद्र भामितोवधीर् हविष्मन्तो नमसा विधेम ते ॥ आ ते पितर्मरुताꣳ सुम्नमेतु। मा नः सूर्यस्य सन्दृशो युयोथाः। अभि नो वीरो अर्वति क्षमेत। प्रजायेमहि रुद्र प्रजाभिः ॥ एवा बभ्रो वृषभ चेकितान। यथा देव न हृणीषे न हꣳसि। हावनश्रूर्नो रुद्रेह बोधि। बृहद्वदेम विदथे सुवीराः ॥ परिणो रुद्रस्य० मृडय ॥ स्तुहि० सेनाः ॥ मीढुष्टम० बिभ्रदागहि ॥ अर्हन्० त्वदस्ति ॥ त्वमग्ने० कृणुध्वम् ॥



---

# देवाऋचः

ॐ मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृताय जातमग्निम् । कविꣳ सम्राजमतिथिं जनानामासन्नापात्रं जनयन्त देवाः ॥ ममत्तु नः परिज्मा व सर्हा ममत्तु वातो अपां वृषण्वान् । शिशीतमिन्द्रापर्वतायुवन्नस्तन्नो विश्वे वरिवस्यन्तु देवाः ॥ स बुध्नादाष्ट जनुषाभ्यग्रं बृहस्पतिर्देवता यस्य सम्राट् । बुध्नाद्यो अग्रमभ्यत्योर्जसा बृहस्पतिमाविवासन्ति देवाः ॥ वायुस्ताꣳ अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया संविदानः । प्रमुञ्चमाना भुवनस्य रेतो गातुं धत्त यजमानाय देवाः ॥ जातवेदो वपया गच्छ देवान्त्वꣳ हि होता प्रथमो बभूथ । घृतेन त्वं तनुवो वर्धयस्व स्वाहाकृतꣳ हविरदन्तु देवाः ॥ शतं वर्चिनः सहस्रं च साकꣳ हथो अप्रत्यसुरस्य वीरान् । उत माता महिषमन्ववेनदमी त्वा जहति पुत्र देवाः ॥ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः ॥ बृहस्पते सवितर्बोधयैनꣳ सꣳ शितं चित्सन्तराꣳ सꣳशिशाधि । वर्धयैनं महते सौभगाय विश्वे एनमनुमदन्तु देवाः ॥ य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम । य आत्मदा बलदा यस्य विश्वे उपासते प्रशिषं यस्य देवाः ॥ ये सहाꣳसि सहसा सहन्ते रेजते अग्ने पृथिवी मखेभ्यः । विश्वेदेवाः विश्वेदेवाः ॥

त्वा विश्वे अभिगृणन्तु देवाः ॥ मर्माणि ते वर्मभिश्छादयामि सोमस्त्वा राजाऽमृतेनाभिवस्ताम् । उरोर्वरीयो वरिवस्ते अस्तु जयन्तं त्वामनुमदन्तु देवाः ॥ प्रजापतेस्तपसा वावृधानः सद्यो जायतो दधिषे यज्ञमग्ने । स्वाहाकृतेन हविषां पुरोगा याहि साध्या हविरदन्तु देवाः ॥ तद्ग्रहाणां ग्रहत्वम् । देवता वा एता यजमानस्य गृहे गृह्यन्ते । यद्ग्रहाः । विदुरेनं देवाः ॥ तदिष्टीनामिष्टित्वम् । एष्टयो ह वै नाम । ता इष्टय इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः ॥ तस्मै दशमꣳ हूतः प्रत्यशृणोत् । स दशहूतोऽभवत् । दशहूतो ह वै नामैषः । तं वा एतं दशहूतꣳ सन्तम् । दशहोतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः ॥ आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै सप्तमꣳ हूतः प्रत्यशृणोत् । स सप्तहूतोऽभवत् । सप्तहूतो ह वै नामैषः । तं वा एतꣳ सप्तहूतꣳ सन्तम् । सप्तहोतेत्या चक्षते परोक्षेण । परोक्षप्रिया इवहि देवाः । आत्मन्नात्मन्नित्या-मन्त्रयत । तस्मै षष्ठꣳ हूतः प्रत्यशृणोत् । स षड्ढूतोऽभवत् ॥ षड्ढूतो ह वै नामैषः । तं वा एतꣳ षड्ढूतꣳ सन्तम् । षड्ढोतेत्या चक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः । आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै पञ्चमꣳ हूतः प्रत्यशृणोत् । स पञ्चहूतोऽभवत् । पञ्चहूतो ह वै नामैषः । तं वा एतं पञ्चहूतꣳ सन्तम् । पञ्चहोतेत्याचक्षते परोक्षेण ॥ परोक्षप्रिया इव हि देवाः । आत्मन्नात्म-न्नित्यामन्त्रयत । तस्मै चतुर्थꣳ हूतः प्रत्यशृणोत् । स चतुर्हूतोऽभवत् । चतुर्हूतो हवै नामैषः । तं वा एतं चतुर्हूतꣳ सन्तम् । चतुर्होतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः ॥

आशिक्षंन्तो न शैकिम। मेदंस्वता यजंमानाः। स्रुचाज्यैन जुह्वंतः। अकामा वों विश्वेदेवाः॥ नहि स्पशमविंदन्नन्यमस्मात्। वैश्वनरात्पुर एतारंमग्नेः। अथैममन्थन्नमृतममूंराः। वैश्वानरं क्षैत्रजित्याय देवाः॥ उपं ते गा इवाकंरम्। वृणीष्व दुंहितर्दिवः। रात्री स्तोमं न जिग्युषीं। देवीं वाचंमजनयन्त देवाः॥ स हि वेद यथा हविः। शिवा अस्मभ्यमोषंधीः। कृणोतुं विश्वचंर्षणिः। भद्रान्नः श्रेयः समंनैष्ट देवाः॥ अयं यज्ञो वंर्धतां गोभिरश्वैः। इयं वेदिंः स्वपत्या सुवीरां। इदं बर्हिरतिं बर्ही९ष्यन्या। इमं यज्ञं विश्वें अवन्तु देवाः॥ देवं देवाय जागृंवि। कामिहैकाः क इमे पंतङ्गाः। मान्थालाः कुलिपरिंमापतन्ति। अनांवृतैनान्प्रधंमन्तु देवाः॥ स्तोमैं सप्तदशे स्तुतम्। वैरूपेणं विशौजंसा। हविरिन्द्रे वयों दधुः। शारदेनर्तुनां देवाः॥ एकवि९श ऋभवंः स्तुतम्। वैराजेनं श्रिया श्रियंम्। हविरिन्द्रे वयों दधुः। हेमन्तेनर्तुनां देवाः॥ मरुतंस्त्रिणवे स्तुतम्। बलेन शक्वरीः सहंः। हविरिन्द्रे वयों दधुः। शैशिरेणर्तुनां देवाः॥ आदित्यान्काममवंसे हुवेम। ये भूतानिं जनयंन्तो विचिख्युः। सीदंन्तु पुत्रा अदिंतेरुपस्थैम्। स्तीर्णं बर्हिर् हंविरद्याय देवाः॥

आ वृंत्रहणा गीर्भिर्विप्रैः। ब्रह्मंणस्पते त्वमस्य यन्ता। सूक्तस्यं बोधि तनंयं च जिन्व। विश्वं तद्भद्रं यदवन्तिं देवाः॥ नराश९सोग्नास्पतिंर्नो अव्यात्। आ ये वामस्यं सङ्गथे रंयीणाम्। प्रिया देवस्यं सवितुः स्यांम। आ नो विश्वे अस्क्रांगमन्तु देवाः॥ शमंभिषाचः शमुंरातिषाचः। शन्नों दिव्याः पार्थिवाः शन्नो अप्याः। ये संवितुः सत्यसंवस्य विश्वें। मित्रस्यं व्रते वरुंणस्य

देवाः ॥ याश्च वैशन्तीरुत प्रांसचीर्याः । यासांमषाढा मधुं भक्षयंन्ति । ता न आपः शꣳ स्योना भंवन्तु । तन्नो विश्वे उपंशृण्वन्तु देवाः ॥ तौ देवेभ्यः कृणुतो दीर्घमायुः । शतꣳ सहस्रां भेषजानिं धत्तः । यज्ञं नो राजा वरुण उपंयातु । तन्नो विश्वे अभिसंयंन्तु देवाः ॥ श्रेष्ठौ देवानांमुत मानुंषाणाम् । तं ब्राँह्मणाः सोंमपाः सोम्यासंः । प्रोष्ठपदासो अभिरंक्षन्ति सर्वे । चत्वार एकंमभिकर्म देवाः ॥ लोकस्य राजा महतो महान् हि । सुगं नः पन्थामभंयं कृणोतु । यस्मिन्नक्षंत्रे यम एति राजा । यस्मिंन्नेनमभ्यषिंञ्चन्त देवाः ॥ यथादेवतमेव प्रसौति । दैव्यंस्य च मानुषस्यं च व्यावृंत्त्यै । त्रिरांह । त्रिषंत्या हि देवाः ॥ य एव देवानांꣳ हविष्कृतंः । तान्ह्वंयति । त्रिर्ह्वंयति । त्रिषंत्या हि देवाः ॥ तद्ब्रह्मणं नात्यंच्यवत । अन्तर्वेदि निनंयत्यवंरुध्यै । उल्मुंकेनाभि गृंह्णाति शृतत्वायं । शृतकांमा इव हि देवाः ॥

तेषां तद्भांगधेयंम् । तानेव तेनं प्रीणाति । वैश्वदेव्यर्चा । एते हि विश्वे देवाः ॥ सद्यो जातो व्यंमिमीत यज्ञम् । अग्निर्देवानांमभवत्पुरोगाः । अस्य होतुः प्रदिश्यृतस्यं वाचि । स्वाहांकृतꣳ हविरंदन्तु देवाः ॥ आत्मन्वान्त्सोम घृतवान् हि भूत्वा । देवान्गंच्छ सुवर्विन्द यजंमानाय मह्यंम् । इरा भूतिः पृथिव्यै रसो मोत्क्रंमीत् । देवीः पितरः पितंरो देवाः ॥ यज्ञियां यज्ञं वि च यन्ति शं चं । ओषंधीरापं इह शक्वंरीश्च । यो मां हृदा मनंसा यश्च वाचा । यो ब्रह्मंणा कर्मंणा द्वेष्टिं देवाः ॥ विच्छिंनद्मि विधृंतीभ्याꣳ सपत्नान् । जातान्भ्रातृंव्यान् ये चं जनिष्यमांणाः । विशो यन्त्राभ्यां विधंमाम्येनान् । अहꣳ स्वानांमुत्तमोंऽसानि देवाः ॥ उषाश्च तस्मै निम्रुक्चं । सर्वं पापꣳ

समूंहताम्। यो नंः सपत्नो यो रणंः। मर्तोऽभि दासंति देवाः ॥ अन्नं विराट्। विराजैवान्नाद्यमवंरुन्धे। त्रेधा विभज्यं देवताँ जुहोति। त्र्यांवृतो वै देवाः ॥ अस्मिन्नेव तल्लोके कामाँन्दधाति। तस्मांदस्मिंल्लोके बहवः कामाँः। त्रयाणां त्रंयाणाऽ सह वपा जुंहोति। त्र्यांवृतो वै देवाः ॥ राजां महिमा। यद्वपां मंहिम्नोभयतंः परि यजंति। यजंमानमेव राज्येनोंभयतः परिंगृह्णाति। पुरस्तांत्स्वाहाकारा वा अन्ये देवाः ॥ एतद्वै तद्देवा एतां देवताँम्। पशुं भूतं मेधायालंभन्त। यज्ञमेव। यज्ञेनं यज्ञमंयजन्त देवाः ॥

तेनं मे तप। तेनं मे ज्वल। तेनं मे दीदिहि। यावंद्देवाः ॥ वासोँ ददाति। तेनायुः प्रतिंरते। वेदितृतीये यंजेत। त्रिषंत्या हि देवाः ॥ कृशांनुर्विश्वावंसुः। मूर्धन्वान्त्सूर्यवर्चाः। कृतिरित्येकादश गंन्धर्वगणाः। देवाश्च मंहादेवाः ॥ एवा हि वांयो। एवाहींन्द्र। एवा हि पूंषन्। एवा हि देवाः ॥ भुवंनं देवसूवंरीः। आदित्यानदिंतिं देवीम्। योनिंनोर्ध्वमुदीषंत। भद्रं कर्णेभिः शृणुयामं देवाः ॥ उषाश्च तस्मैं निमुक्च सर्वं पापऽ समूंहताम्। यो नंः सपत्नो यो रणो मर्तोऽभिदासंति देवाः ॥ ऋतस्यं पदे कवयो निपांन्ति। अन्तः प्रविष्टं कर्तारंमेतम्। अन्तश्चन्द्रमंसि मनंसा चरंन्तम्। सहैव सन्तं न विजांनन्ति देवाः ॥ शक्रः प्र विद्वान्प्रदिशश्चतंस्रः। तमेवं विद्वानमृतं इह भंवति। नान्यः पन्था अयंनाय विद्यते। यज्ञेनं यज्ञमंयजन्त देवाः ॥



# मन्त्रप्रश्नः - १

ॐ प्रसुग्मन्ता धियसानस्यं सक्षिणिं वरेभिर्वरा॒ अभिषु प्रसीदत । अस्माकमिन्द्रं उभयं जुजोषति यत्सौम्यस्यान्धंसो बुबोंधति ॥ अनृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्ति नोवरेयम् । समर्यमा संभगो नो निनीयात्सञ्जास्पत्य॒ सुयममंस्तु देवाः ॥ अघोरचक्षुरपंतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः । जीवसूर्देवकामा स्योना शन्नो भव द्विपदे शं चतुष्पदे ॥ इदमहं या त्वयिं पतिघ्न्यंलक्ष्मीस्तान्निर्दिशामि ॥ मित्रोऽसि ॥ अभ्रातृघ्नीं वरुणापंतिघ्नीं बृहस्पते । इन्द्रापुत्रघ्नीं लक्ष्म्यंन्तामस्यै सवितुः सुव ॥

राष्ट्रभृदंस्याचार्यासन्दी मा त्वद्योषम् ॥ आपः पादावनेजनीर्द्विषन्तं नाशयन्तु मे । अस्मिन्कुले ब्रह्मवर्चस्यंसानि ॥ मयि महो मयि भगो मयि भर्गो मयि यशः । मयीन्द्रियं वीर्यम् ॥ आम आगाद्वर्चसा यशसा स॒सृज पयसा तेजसा च । तं मां प्रियं प्रजानां कुर्वधिपतिं पशूनाम् ॥ विराजोऽसि विराजो दोहमशीय मम पद्याय विराजा ॥ समुद्रं वः प्रहिणोम्यक्षिताः स्वां योनिमपिं गच्छत । अच्छिद्रः प्रजया भूयासं मा परासेचिमत्पयः ॥

त्रय्यै विद्यायै यशोऽसि यशसो यशोऽसि ब्रह्मणो दीप्तिरसि । तं मां प्रियं प्रजानां कुर्वधिपतिं पशूनाम् ॥ नेष्टाविद्धं कृन्तामि या ते घोरा तनूस्तया तमाविशायोऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ यन्मधुनो मधव्यं परममन्नाद्यं वीर्यम् । तेनाऽहं मधुनो मधव्येन परमेणान्नाद्येन वीर्येण परमोऽन्नादो मधव्योऽसानि ॥ गौरस्यपहतपाप्मापपाप्मानं नुदममं चामुष्यं च ॥ अग्निः

प्रथमः प्राश्नातु सहि वेद यथा हविः। अरिष्टमस्माकं कृणोत्वसौ ब्राह्मणो ब्राह्मणेषु ॥ गौर्धेनुभव्या माता रुद्राणाम् ॥ भूत९ सा विराट् तन्माक्षायि तन्मेऽशीय तन्म ऊर्जं धाः ॥ ओं कल्पयत ॥

विराडसि विराडन्नं विराड्विराजो मयि धेहि ॥ जुषस्वनः समिधमग्ने अद्य शोचा बृहद्यजतं धूममृण्वन्। उपस्पृश दिव्य९ सानु स्तूपैः स९रश्मिभिस्ततनः सूर्यस्य ॥ अदितेऽनुमन्यस्व ॥ अनुमतेऽनुमन्यस्व ॥ सरस्वतेऽनुमन्यस्व ॥ देव सवितः प्रसुव ॥ युक्तो वह जातवेदः पुरस्तादग्ने विद्धि कर्म क्रियमाणं यथेदम्। त्वं भिषग्भेषजस्यासि कर्ता त्वया गा अश्वान्पुरुषान्सनेमि ॥ आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः। देवानो यथा सदमिद्वृधेऽसन्नप्रायुवो रक्षितारो दिवे दिवे ॥

विरूपाक्ष मा विबाधिष्ठा मा विबाध विबाधिथाः। निर्ऋत्यै त्वा पुत्रमाहुः सनः कर्माणि साधय ॥ विरूपाक्षमहं यजे निजङ्घ९ शबलोदरम्। यो मायं परिबाधते श्रियै पुष्ट्यै च नित्यदा तस्मै ॥ या तिरश्चीनि पद्यसेऽहं विधरणी इति। तां त्वा घृतस्य धारयाग्नौ स९राधिनीं यजे ॥ स९राधिन्यै देव्यै स्वाहा ॥ प्रसाधिन्यै देव्यै स्वाहा ॥ मम हृदये हृदयं ते अस्तु मम चित्ते चित्तमस्तु ते। मम वाचमेकमनाः शृणु मामेवानुव्रता ॥ सहचर्या मया भव ॥

मां ते मनः प्रविशतु मां चक्षुर्मामु ते भगः। मयि सर्वाणि भूतानि मयि प्रज्ञानमस्तु ते ॥ मधु हे मध्वगाहे जिह्वा मे मधुवादिनी। मुखे मे सारघं मधु दत्सु संवननं कृतम् ॥ चाक्रवाक९ संवननं यन्नदीभ्य उदाहृतम्। यद्वित्तौ

दैवगन्धर्वौ तेन संवनिनौ स्वः ॥ स्पृशामि तेऽहमङ्गानि वायुरापश्च मापरः । मां चैव पश्य सूर्यं च मा चान्येषु मनः कृथाः ॥ सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥

सोमोऽददद्गन्धर्वाय गन्धर्वोऽददद्ग्नये । रयिं च पुत्राꣳश्चादादग्निर्मह्यमथो इमाम् ॥ सरस्वति प्रेदमव सुभगे वाजिनीवति । तां त्वा विश्वस्य भूतस्य प्रगायामस्यग्रतः ॥ गृभ्णामि ते सुप्रजास्त्वाय हस्तं मया पत्या जरदष्टिर्यथासः । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वा दुर्गार्हपत्याय देवाः ॥ सोमाय जनिविदे स्वाहा गन्धर्वाय जनिविदे स्वाहाग्नये जनिविदे स्वाहा कन्यला पितृभ्यो यती पतिलोकमवदीक्षामदास्थ स्वाहा ॥ प्रेतो मुञ्चाति नामुतः सुबद्धाममुतस्करत् । यथेयमिन्द्र मीढ्वः सुपुत्रा सुभगासति ॥

इमां त्वमिन्द्र मीढ्वः सुपुत्राꣳ सुभगां कृणु । दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि ॥ अग्निरैतु प्रथमो देवतानाꣳ सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयꣳ राजा वरुणोऽनुमन्यतां यथेयꣳ स्त्रीपौत्रमघं नरोऽदात् ॥ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः । अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिप्रबुध्यतामियम् ॥ मा ते गृहे निशि घोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु । मा त्वं विकेश्युर आवधिष्ठा जीवपत्नी पतिलोके विराज पश्यन्ती प्रजाꣳ सुमनस्यमानाम् ॥ अप्रजस्तां पौत्रमृत्युं पाप्मानमुतवाघम् । शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाशम् ॥

आतिष्ठेममश्मानमश्मेव त्वꣳ स्थिरा भव। अभितिष्ठ पृतन्यतः सहस्व पृतनायतः॥ इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती। दीर्घायुरस्तु मे पतिर्जीवातु शरदः शतम्॥ तुभ्यमग्ने पर्यवहन्त्सूर्यां वहतुना सह। पुनः पतिभ्यो जायान्दा अग्ने प्रजया सह॥ पुनः पत्नीमग्निरदादायुषा सह वर्चसा। दीर्घायुरस्याय: पतिः स एतु शरदः शतम्॥ विश्वा उत त्वया वयं धारा उदन्या इव। अतिगाहेमहि द्विषः॥ यदस्य कर्मणोऽत्यरीरिचं यद्वान्यूनमिहाकरम्। अग्निष्टत्स्विष्टकृद्वि-द्वान्सर्वꣳ स्विष्टꣳ सुहुतं करोतु मे। अग्नये स्विष्टकृते सुहुतहुत आहुतीनां कामानाꣳ समर्धयित्रे॥ प्रसुग्मन्तांत्रिनवतिः॥

ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनाꣳ अनु। पुनस्तान्यज्ञिया देवा नयन्तु यत आगताः॥ पूषा त्वेतो नयतु हस्तगृह्याश्विनौ त्वा प्रवहताꣳ रथेन। गृहान्गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमावदासि॥ सुगं पन्थानमारुक्षमरिष्टꣳ स्वस्ति वाहनम्। यस्मिन्वीरो नरिष्यत्यन्येषां विन्दते वसु॥ या ओषधयो या वनस्पतयो या नद्यो यानि धन्वानि ये वना। ते त्वा वधु प्रजावतीं प्रत्वे मुञ्चन्त्वꣳ हसः॥ भद्रान् गृहान्सुमनसः प्रपद्येऽवीरघ्नी वीरवतस्सुवीरान्। इरां वहतो घृतमुक्षमाणास्तेष्वहꣳ सुमनाः संविशानि॥

प्रजावती पशुमती रयिमती पुष्टिमती तेजस्विनी गृहमेधिनी यशस्विनी ब्रह्मवर्चस्विनी भूयासम्॥ इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः। इहो सहस्रदक्षिणो रायस्पोषो निषीदतु॥ नीललोहिते भवतः कृत्यासक्तिर्व्यज्यते। एधन्तेऽस्याज्ञातयः पतिर्बन्धेषु बध्यते॥ उदायुषा स्वायुषोदोषधीनाम्॥

ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवमसि ध्रुवतः स्थितः। त्वं नक्षत्राणां मेथ्यसि स मां पाहि पृतन्यतः॥ सप्तऋषयः प्रथमां कृत्तिकानामरुन्धतीं यद्ध्रुवताᳮ ह निन्युः। षट्कृत्तिकामुख्ययोगं वहन्तीयमस्माकमेध त्वष्टम्यरुन्धतीम्॥

यस्त्वां हृदा यस्मै त्वं॥ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वां नाथकामः प्रपद्ये यास्यां पतिघ्नी तनूः प्रजाघ्नी पशुघ्नी लक्ष्मिघ्नी जारघ्नीमस्यैतां कृणोमि स्वाहा॥ वायो प्रायश्चित्त आदित्य प्रायश्चित्ते प्रजापते प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वां नाथकामः प्रपद्ये यास्यां पतिघ्नी तनूः प्रजाघ्नी पशुघ्नी लक्ष्मिघ्नी जारघ्नीमस्यैतां कृणोमि स्वाहा॥ हव्य वाहᳮ स्विष्टम्। अर्यम्णो अग्निं परियन्तु क्षिप्रं प्रतीक्षन्ताᳮ श्वश्रुवो देवरांश्च। प्रजया त्वा सᳮसृजामि मासरेण सुरामिवं प्रजावती भूयासम्। प्रजयां त्वा पशुभिः सᳮसृजामि मासरेण सुरामिव प्रजावान्पशुमान्भूयासम्॥

उदीर्ष्वातो विश्वावसो नमसेडामहे त्वा। अन्यामिच्छ प्रफर्व्यᳮ संजायां पत्या सृज॥ उदीर्ष्वातः पतिवती ह्येषा विश्वावसुं नमसा गीर्भिरीडे। अन्यामिच्छ पितृषदं व्यक्ताᳮ स ते भागो जनुषा तस्य विद्धि॥ प्रजापतिः स्त्रियां यशः॥ प्रजायै त्वा॥ जीवाᳮ रुदन्ति विमयन्ते अध्वरे दीर्घामनुप्रसितिं दीधियुर्नरः। वामं पितृभ्यो य इदᳮ संमे रिरिमयः पतिभ्यो जनयः परिष्वजे॥ ये वध्वः षट्त्रिᳮ शत्॥

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिᳮशतु। आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते॥ यथाग्निगर्भा पृथिवी द्यौर्यथेन्द्रेण गर्भिणी।

वायुर्यथा दिशां गर्भ एवं गर्भं दधातु ते ॥ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति । गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा ॥ हिरण्ययी अरणी यन्निर्मन्थतो अश्विना । तं ते गर्भꣳ हवामहे दशमे मासि सूतवे ॥ नेजमेष परापत सुपुत्रः पुनरापत । अस्यै मे पुत्रकामायै गर्भमाधेहि यः पुमान् ॥

अमूहमस्मि ॥ अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः । अहं प्रजा अजनयं पितृणामहं जनिभ्यो अपरीषु पुत्रान् ॥ तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति । या न ऊरू उशती विस्रयातै यस्यामुशन्तः प्रहराम शेपम् ॥ यथा त्वं वनस्पते ऊर्जाभ्युत्थितः शतवल्शो विरोहस्यैवमहं पुत्रैश्च पशुभिश्च सहस्रवल्शा वि वयꣳ रुहेम । यथा त्वं वनस्पते फलवान-स्यैवमहं पुत्रैश्च पशुभिश्च फलवन्तो भवानि ॥ ऊर्जस्वान्पयस्वान्पयसा पिन्वमानोऽस्मान्वनस्पते पयसाभ्यावववृत्स्व । दीर्घायुत्वाय वर्चसे प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाशः ॥ अग्निर्मूर्धा भुवोऽयं ते योनिर्ऋत्वियं आजुह्वान उद्बुध्यस्वाग्ने ॥ विष्णुर्योनिं विꣳशतिः ॥

प्रवेधसे यस्त्वा हृदा यस्मै त्वं त्वे सुपुत्रशवसः ॥ ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहा प्रतिष्ठायै स्वाहा प्रतिष्ठित्यै स्वाहा सम्पत्यै स्वाहा सम्पतये स्वाहा ब्रह्मणे स्वाहाऽऽयतनवते स्वाहा तत्सवितुर्वृणीमहे तत्सवितुर्यतं इन्द्रभयामहे स्वस्तिदाविशस्पतिः ॥ प्रजापते तन्वं मे जुषस्व त्वष्टर्देवेभिः सह साम इन्द्र । विश्वैर्देवैरातिभिः सꣳरराणः पुꣳसां बहूनां मातरः स्याम ॥ गर्भो अस्योषधीनां प्रसद्य पुनरासद्यास्मे देवासो बपुषे चिकित्सत ॥ धाता ददातु

नो र॒यिं धा॒ता प्र॒जायां धा॒ता द॑दातु नो र॒यिं प्राचीँ धा॒ता द॑दातु दा॒शुषेऽनु॑नोऽद्यानु॑मति॒रन्विद॑नुमते त्वमनु॑मन्यतामनु॒मन्य॑माना॒ यस्यां॑मि॒दꣳ रा॒काम॒हं यास्तें रा॒के सिनीवालि॒ या सु॑पाणिः कु॒हूम॒हं कु॒हूर्दे॒वानां॑म् ॥ यवोंऽसि य॒वया॒स्मद्द्वेषों य॒वयारा॑तीः ॥ सोम॑ एव नो॒ राजेत्यां॑हु॒र्ब्राह्म॒णीः प्र॒जाः । विवृ॑त्तचक्रा आसीना॒स्तीरे॑णासु॒ तवं ॥ इ॒दं विष्णु॒स्तद्विष्णो॒रिरां॑वती॒तत्सं- वि॒तुरुद्दीं॑प्यस्व ॥ विष्णो॒र्नुकं तद॑स्यप्रि॒यं प्रतद्विष्णुं॑ः प॒रोमात्र॑या॒ विचं॑क्रमे॒ त्रि॒र्दे॒वः ॥ प्रवे॒धस॒ एकां॑दश ॥

अ॒न्ध्यसम्भूं॑तः क्षेत्रि॒यै त्वेति॒ षट् ॥ अङ्गां॑दङ्गा॒त्सम्भ॑वसि॒ हृद॑या॒दधिं॑जायसे । आ॒त्मा वै पुं॑त्रनामां॑सि॒ स जीव॑ श॒रदः॑ श॒तम् ॥ अश्मां भव प॒र॒शुर्भ॑व॒ हिर॑ण्य॒मस्तृ॑तं भव । प॒शूनां त्वां हि॒ङ्कारे॑ण॒ ब्रह्म॑णाभिजिं॑घ्राम्य॒सौ ॥ अ॒ग्निरायु॑ष्मानायु॑ष्टे प्रा॒णो र॑क्षति॒ विश्व॒मेज॑त् ॥ भूर्भु॒वः सु॒वः सीद॒त्वं मा॒तुरस्या यस्ते॒ स्तनः॑ ॥ द्यौस्ते॑ पृ॒ष्ठꣳ र॑क्षतु वा॒यु॒रू॒रू अ॒श्विनौ च॒ स्तन॒ धयं॑न्तꣳ सवि॒ताभिर॑क्षतु । आवास॑सः परि॒धाना॒द्बृह॒स्पति॒र्विश्वे॑ दे॒वा अ॒भि र॑क्षन्तु प॒श्चात् ॥ आप॑ः सु॒प्तेषु॑ जाग्रत॒ रक्षांꣳसि॒ निरि॒तो नु॑दध्वम् ॥

हरि॒ꣳ हर॑न्त॒ माकिंदोमृत्यो स॒चश्च॑कमा॒नाय॒ कामेन मे॒ परं मृत्यो॒ प्रपूर्व्यं नम॑ आव्या॒धिनीभ्यः॑ कृणु॒ष्व पाजः प्रसि॑ति॒न्नपृ॒थ्वीम् ॥ अ॒घोरां॑यम॒घोरां॑य॒नैजं- मेषा॒य॒ नमो॒ नमः॑ ॥ आ॒वेशिनीं ह्यश्रु॒मुखी कु॒तूहली ह॒स्तिनी जृ॒म्भिणीं स्त॒म्भि॒नी मोहिं॑नी च । कृ॒ष्णावि॒शाखारि॒म-लाब्र॑ह्म॒रात्री भ्रा॒तृव्यस॒ङ्घेषु॒ पत॑न्त्यमो॒घास्ताभ्यो वै मातृ॑भ्यो नमो॒ नमः॑ ॥ प्र॒जाप॑ते॒ नत्वद्द्र॑यी॒णां पति॑

प्रजापते त्वं तवेमे लोकाः प्रजापतिं प्रथमं यो रायः ॥ स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः । स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावा पृथिवी सुचेतुना ॥ स्वस्तये वायुमुपब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः । बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥ विश्वेदेवानो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये । देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वं हसः ॥

स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति । स्वस्ति न इन्द्रश्चाग्निश्च स्वस्ति नो अदिते कृधि ॥ स्वस्ति पन्थामनुचरेम सूर्याचन्द्रमसाविव । पुनर्ददता घ्नता जानता सङ्गमेमहि ॥ स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानाम् । असुरघ्नमिन्द्रसखं समत्सु बृहद्यशो नावमिवारुहेम ॥ अंहोमुचमाङ्गिरसं गयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यम् । प्रयतपाणिः शरणं प्रपद्ये स्वस्ति संबाधेष्वभयं नो अस्तु ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ अहमस्मीत्यष्टौ याजाता ओषधय इति षट् ॥

भूर्भुवः सुवरपांत्वौषधीना रसमन्नं प्राशयामि शिवास्त आप ओषधयः सन्त्वनमीवास्त आप ओषधयः सन्तु ॥ प्राणो रक्षति यो देवो देवेषु मनसश्चित्तेदमानं एतु जुषतां मे वाग्यया रूपाणि चक्षुर्देवानामायुरग्निः श्रोत्रेण भद्रं ये न प्राच्या ॥ समुद्रायं गायत्री त्रिष्टुब्द्विपदा ॥ वरुणस्य स्कम्भनमसि वरुणस्य स्कम्भसर्जनमसि ॥ ये केशिनं उष्णेन वायवुदकेनेह्यदितिः

केशाँन्वपतु ॥ आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे ओषधे त्रायस्वैनं ज्योक्चसूर्यं दृशे ॥ स्वधितेमैनं॰ हि॰सीर्येनावपत् ॥ अन्न एकान्न-चत्वारि॰शत् ॥

यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्। आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ आयुर्दा देवजरसं गृणानो घृतप्रतीको घृतपृष्ठो अग्ने। घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसे नयेमम् ॥ आतिष्ठेममश्मानमश्मेव त्व॰ स्थिरो भव। अभितिष्ठ पृतन्यतः सहस्व पृतना यतः ॥ या अकृन्तन्नवयन्या अतन्वत याश्च देवीरन्तानभितो ददन्त। तास्त्वा देवीर्जरसा संव्ययन्त्वायुष्मानिदं परिधत्स्व वासः ॥ परिधत्त धत्त वाससैन॰ शतायुषं कृणुहि दीर्घमायुः। बृहस्पतिः प्रायच्छद्वास एतत्सोमाय राज्ञे परिधातवा उ ॥

जरां गच्छासि परिधत्स्व वासो भवाकृष्टीनामभिशास्ति पावा। शतञ्च जीव शरदस्सुवर्चा रायश्च पोषमुपसंव्ययस्व ॥ परीदं वासो अदिधाः स्वस्तयेऽभूरापीनामभिशस्ति पावा। शतञ्च जीव शरदः पुरूचीर्वसूनि चार्यो विभजासि जीवन् ॥ इयं दुरुक्तात्परिबाधमाना शर्म वरूथं पुनती न आगात् ॥ प्राणापानाभ्यां बलमाभरन्ती प्रिया देवाना॰ सुभगा मेखलेयम् ॥ ऋतस्य गोप्त्री तपसः परस्पी घ्नती रक्षस्सहमाना अरातीः। सा नस्समन्तमनुपरीहि भद्रया भर्तारस्ते मेखले मारिषाम ॥ प्राणानां ग्रन्थिरसि समा विस्रसः ॥

मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविर॰ समिद्धम् ॥

अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधेऽहम् ॥ सोमोंऽसि सोमपं मा कुरु ॥ ब्रह्मवर्चसमंसि ब्रह्मवर्चसायं त्वा ॥ ओजोऽस्योजो मयिं धेहि। बलंमसि बलं मयिं धेहि। पुष्टिंरसि पुष्टिं मयिं धेहि ॥ ऊर्गस्यूर्जं मयिं धेहि। अहं वृक्षस्य को नामाँस्यसौ नामाँस्मि ॥ यस्मिंन्भूतं च भव्यं च सर्वे लोकाः समाहिताः। तेनं गृह्णामि त्वामहं मह्यं गृह्णामि त्वामहं प्रजापंतिना त्वा मह्यं गृह्णाम्यसौ ॥

देवेभ्यंस्त्वा परिंददामि विश्वदेंवेभ्यस्त्वा परिंददामि विश्वेंभ्यस्त्वा देवेभ्यः परिंददामि सर्वेंभ्यस्त्वा देवेभ्यः परिंददामि सर्वाभ्यस्त्वा देवताभ्यः परिंददाम्यसौ ॥ देवस्यं त्वा सवितुः प्रंसवेंऽश्विनोंर्बाहुभ्यां पूष्णो हस्ताभ्यामुपंनयेऽसौ ॥ यश्छन्दंसां क्षेत्रिये त्वा ब्रह्मंजज्ञानं नमों अस्तु नीलंग्रीवाय ॥ अग्नें व्रतपते सावित्रं व्रतं चंरिष्यामि तच्छंकेयं तन्में राध्यताम् ॥ वायों व्रतपत आदिंत्य व्रतपते व्रतानाँ व्रतपते सावित्रं व्रतं चंरिष्यामि तच्छंकेयं तन्में राध्यताम् ॥

राष्ट्रभृदंस्याचार्यासन्दी मात्वद्योषम् ॥ शरीरं म उद्वयं तमंसस्परिं ॥ सुश्रवंः सुश्रवंसं मा कुरु यथा त्वꣳ सुश्रवंः सुश्रवा अस्येवमहꣳ सुश्रवंः सुश्रवा भूयासम् । यथा त्वꣳ सुश्रवंस्सुश्रवो देवानाँ निधिगोपोंऽस्येवमहं ब्राँह्मणानां ब्रह्मंणो निधिगोपो भूयासम् ॥ यन्मं आत्मनः पुनंरग्निः ॥ अग्नें व्रतपते सावित्रं व्रतमंचारिषं तदंशकं तन्में राधि ॥ वायों वतपत आदिंत्य व्रतपते व्रतानाँ व्रतपते सावित्रं व्रतमंचारिषं तदंशकं तन्में राधि ॥ यस्यं ते

प्रथमवास्यं॒ हरांमस्तं त्वा विश्वे अनुंमदन्तु देवाः । तं त्वा भ्रातंरस्सुहृदो वर्धमानमनुंजायन्तां बहवः सुजांतम् ॥ यज्ञोपवीतं त्रिचंत्वारि॒शत् ॥

याज्ञिकीभ्यो देवताभ्यः स्वाहा सा॒हितीभ्यो देवताभ्यः स्वाहा वारुणीभ्यो देवताभ्यः स्वाहा सर्वाभ्यो देवताभ्यः स्वाहा प्रजापंतये काण्डऋषये स्वाहा सोमाय काण्डऋषये स्वाहाऽग्नयें काण्डऋषये स्वाहा विश्वेभ्यो देवेभ्यः काण्डऋषिभ्यः स्वाहा स्वयम्भुवे काण्डऋषये स्वाहा ॥ सदंसस्पतिं तत्संवितुः ॥ ऋग्वेदाय स्वाहा यजुर्वेदाय स्वाहा सामवेदाय स्वाहाऽथर्ववेदाय स्वाहाऽथर्वाङ्गिरोभ्यः स्वाहेतिहासपुराणेभ्यः स्वाहा सर्पदेवजनेभ्यः स्वाहा सर्वभूतेभ्यः स्वाहा ॥ याज्ञिकीभ्यस्त्रीणि ॥

इम॒ स्तोमम्मर्हते जातवेदसे रथमिव संमहे मा मनीषया । भद्रा हि नः प्रमंतिरस्य स॒ सद्यग्ने सख्ये मारिषा मा वयं तव ॥ त्र्यायुषं जमदंग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य त्र्यायुषमृषीणां त्र्यायुषं यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम् ॥ शिवामे भवथ स॒ स्पृशे ॥ क्षुरो नामांसि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हि॒सीः ॥ यत्क्षुरेण वर्चयसि वप्ता वपसि केशश्मश्रु वर्चय मे मुखं मा म आयुः प्रमोषीः ॥ इमं विष्याभि वरुणस्य पाशमिदमहममुष्यामुष्यायणस्य शुचा पाप्मानमवगूहाम्युत्तरस्य द्विषन्त्वः ॥ अन्नाद्याय व्यपोहध्वं भगो राजायमागमत् । स मे मुखं प्रसर्पतु वर्चसे च भगाय च ॥ नमः शाकं जञ्भाभ्यां नमस्ताभ्यो देवताभ्यो या अभिग्राहिणीः ॥

अप्सरासु च यो गन्धो गन्धर्वेषु च यद्यशः । दिव्यो यो मानुषो गन्धः स मामाविशत्विह ॥ स्वामांतनूराविंश शिवा मां तनूराविंश ॥ इयमोषधे त्रायमाणा सहमाना सहस्वती । सा मां करोतु सोमवर्चसꣳ सूर्यवर्चसं ब्रह्मवर्चसिनमन्नादं करोतु स्वाहा ॥ विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहिद्विषः ॥ आयुष्यं वर्चस्यꣳ रायस्पोषमौद्भिदम् । इदꣳ हिरण्यं वर्चसे जैत्र्यायाविशतादिमꣳ रयिꣳस्वाहा ॥ शुनिमिवाहꣳ हिरण्यस्य पितुरिव नामाग्रभैषम् ॥ तन्मां करोतु सोमवर्चसꣳ सूर्यवर्चसं ब्रह्मवर्चसिनमन्नादं करोतु स्वाहा ॥

उच्चैर्वाजिपृतनासहꣳसंभासाहं धनं जयम् ॥ सर्वाः समृद्धिरृद्धयो हिरण्ये याः समाहिताः स्वाहा ॥ विराजं च स्वराजं चाभिष्टीर्या च नो गृहे ॥ लक्ष्मी राष्ट्रस्य यामुखे तया मासꣳसृजामसि स्वाहा ॥ यशो मा कुरु ब्राह्मणेषु यशो राजसु मा कुरु ॥ यशो विश्येषु शूद्रेष्वहमस्मि यशास्तव स्वाहा ॥ ऋतुभिस्त्वार्तवैः संवत्सरस्य धायसा ॥ तैस्त्वा सहानुकरोमि ॥ शुभिके शिर आरोह शोभयन्ती मुखं मम ॥ मुखꣳ हि मम शोभय भूयाꣳसं च भगं कुरु ॥ यां त्वा जहार जमदग्निः श्रद्धायै कामायान्यै ॥ तां त्वेमां प्रतिमुञ्चामि वर्चसे च भगाय च ॥ यदाञ्जनं त्रैककुदं जातꣳ हिमवंत उपरि ॥ तेन वामाञ्जे मयि पर्वत वर्चसमस्तु ॥ यन्मे मनः परागतमादर्शे परिपश्यतः ॥ इदं तन्मयि पश्याम्यायुष्यं वर्चस्यं मे अस्तु ॥ द्यौरसि पृथिव्यसि सखा मा गोपाय ॥ दिव्योऽसि सुपर्णोऽन्तरिक्षान्मा पाहि ॥ आवहन्ती वितन्वानाऽऽमा यन्तु ब्रह्मचारिणः स्वाहा विमा यन्तु ब्रह्मचारिणः स्वाहा प्रमा यन्तु

ब्रह्मचारिणः स्वाहा दमां यन्तु ब्रह्मचारिणः स्वाहा शमां यन्तु ब्रह्मचारिणः स्वाहोन्मां यन्तु ब्रह्मचारिणः स्वाहा यशो जनोऽसानि स्वाहा श्रेयान् वस्यंसोऽसानि स्वाहा तन्त्वांभग प्रविंशानि स्वाहा समां भग प्रविंश स्वाहा तस्मिन्त्सहस्रंशाखे यथापंः प्रतिवेशोंऽसि देवीः षडुर्वीः ॥ अयाश्चाग्नेऽस्यनंभिशस्तीश्चं सत्यमित्वमया अंसि ॥ अयंसा मनंसा धृतोऽयसां हव्यमूंहिषेऽयानों धेहि भेषजम् ॥ इमꣳस्तोमं द्विचंत्वारिꣳशत् ॥

आत्वांवहन्तु हरंयः सचेंतसः श्वेतैरश्वैः सहकें तुमद्भिर्वातांजवैर्बलंवद्भिर्मनोंजवैरायांहि शीघ्रं ममं हव्यायं शर्वोमीशानमावांहयामि ॥ देवेभ्यः स्वाहां पितृभ्यंः स्वधा भूतेभ्यो नमों मनुष्येभ्यो हन्तां ॥ अग्नये स्वाहा सोमांय स्वाहां ध्रुवाय स्वाहां ध्रुवायं भूमाय स्वाहां ध्रुवक्षितंये स्वाहांऽच्युतक्षितंये स्वाहेशांनाय स्वाहा जयंन्ताय स्वाहा धर्माय स्वाहा धर्मरुचये स्वाहा धन्वंन्तरये स्वाहा विद्यांयै स्वाहाम्बिंकायै स्वाहा हरंये स्वाहां गणेभ्यः स्वाहां गणपंतिभ्यः स्वाहा परिषद्भ्यः स्वाहा विश्वेभ्यो देवेभ्यः स्वाहां साध्येभ्यो देवेभ्यः स्वाहा सर्वेभ्यो देवेभ्यः स्वाहा सर्वाभ्यो देवताभ्यः स्वाहा भूः स्वाहा भुवः स्वाहा सुवः स्वाहा भूर्भुवः सुवः स्वाहाग्नये स्विष्टकृते स्वाहा ॥ धर्माय स्वाहाऽधर्माय स्वाहां कद्रुवे नागमात्रे स्वाहां सर्पेभ्यः स्वाहा ॥ अचंलायै देव्यै स्वाहां वास्तुपाल्यै सगंणायै स्वाहाऽद्भ्यः स्वाहा वरुंणाय स्वाहां प्रजापंतये स्वाहां परमेष्ठिने स्वाहर्षगाय स्वाहां रुद्राय स्वाहां रुद्राण्यै स्वाहौषधिवनस्पतिभ्यः स्वाहां रक्षोदेवजनेभ्यः स्वाहा कामांय स्वाहा भगांय स्वाहां श्रियै स्वाहा विष्णंवे स्वाहां गृहाय स्वाहां गृहरांजाय स्वाहा

धनंधान्याभ्या॑ स्वाहां वैश्रवणाय स्वाहाँ श्रियै स्वाहा पुष्ट्यै स्वाहाँ ॥ उलूखलमुसलाभ्या॑ स्वाहां दृषदुपलाभ्या॑ स्वाहां समूहंन्यै देव्यै स्वाहा गृहाँभ्यः स्वाहांऽवसानेंभ्यः स्वाहांऽवसानंपतिभ्यः स्वाहां सर्पदेवजनेभ्यः स्वाहां सर्वभूतेभ्यः स्वाहाऽन्तरिंक्षाय स्वाहांऽवान्तरिक्षाय स्वाहां धात्रे स्वाहां विधात्रे स्वाहा भूत्यै स्वाहा प्रभूंत्यै स्वाहा यदेजंति जगंति यच्च चेष्टंति नाम्नों भागोऽयं नाम्ने स्वाहाँ ॥ ज्येष्ठाँभ्या॑ स्वाहां करस्कराभ्या॑ स्वाहां श्रियै स्वाहा विष्णंवे स्वाहां रुद्राय स्वाहां पशुभ्यः स्वाहां पशुपतंये स्वाहां वास्तोष्पतंये स्वाहां पृथिव्यै स्वाहाऽन्तरिंक्षाय स्वाहां दिवे स्वाहा सूर्याय स्वाहां चन्द्रमंसे स्वाहा नक्षंत्रेभ्यः स्वाहाऽद्भ्यः स्वाहौषंधीभ्यः स्वाहा वनस्पतिंभ्यः स्वाहां चराचरेभ्यः स्वाहां परिप्लवेभ्यः स्वाहां सरीसृपेभ्यः स्वाहा देशेंभ्यः स्वाहा कालेंभ्यः स्वाहा लोकेंभ्यः स्वाहा वेदेंभ्यः स्वाहां देवेभ्यः स्वाहर्षिंभ्यः स्वाहा वसुंभ्यः स्वाहां रुद्रेभ्यः स्वाहांऽऽदित्येभ्यः स्वाहेन्द्राय स्वाहा बृहस्पतंये स्वाहाँ प्रजापंतये स्वाहा ब्रह्मंणे स्वाहाऽऽयतंनवते स्वाहा नमों रुद्रायं पशुपतंये स्वाहा प्राच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहाँ प्रतीच्यैं दिशे स्वाहोदींच्यै दिशे स्वाहोर्ध्वायैं दिशे स्वाहाऽधंरायै दिशे स्वाहाग्नये स्वाहा निरृंतये स्वाहां वायवे स्वाहेशांनाय स्वाहाँ ॥ ये भूताः प्रचरंन्ति दिवा नक्तं बलिमिच्छन्तों वितुदस्य प्रेष्याः । तेभ्यों बलिं पुंष्टिकामों हरामि मयि पुष्टिं पुष्टिंपतिर्दधातु स्वाहा नमों रुद्रायं भौमाय स्वाहाँ ॥ आत्वांवहन्तु नवं ॥

आम आगंच्छन्तु पितरों देवयानांन्त्समुद्रान्त्संलिलान्त्सुंपर्णान् ।

अस्मिन्यज्ञे सर्वकामाँल्लभन्ते क्षीयमाणा उपदुह्यन्तामिमाः पितृभ्यो वो गृह्णामि ॥ तिलोऽसि सोमदैवत्यो गोसवो देवनिर्मितः । प्रत्नवद्भिः प्रत्तस्वधया एहि पितृनिमाँल्लोकान्प्रीणयाहि नः स्वधा नमः ॥ अपहता असुरा रक्षाᳫसि पिशाचा ये क्षयन्ति पृथिवीमनु । अन्यत्रेतो गच्छन्तु यत्रैषां गतं मनः ॥ आयांत पितरः सोम्यागम्भीरैः पथिभिः पूर्व्यैः । प्रजामस्मभ्यं ददतो रयिं च दीर्घायुत्वं च शत शारदं च ॥ उदीराणा इह सन्तु नः सोम्याः पितरः पितामहाः प्रपितामहाश्चानुगैस्सह । असुङ्गमाः सत्ययुंजो वृकास आनो हवं पितरोद्यागमन्तु ॥ एह गच्छन्तु पितरो हविषे अत्तवे । अस्मिनयज्ञे बर्हिष्यानिषद्य । मा वीरः प्रमायुनक् ॥

याः प्राचीस्सम्भवन्त्याप उत्तरतश्च याः । अद्भिर्विश्वस्य भुवनस्य धर्त्रीभिरन्तरन्यं पितुर्दधे स्वधा नमः स्वाहा ॥ अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या । दिवा दिग्भिरनन्ताभिरूतिभिरन्तरन्यं पितामहाद्दधे स्वधा नमः स्वाहा ॥ अन्तर्दध ऋतुभिः सर्वैरहोरात्रैः ससन्धिकैः । अर्धमासैश्च मासैश्चान्तरन्यं प्रपितामहाद्दधे स्वधा नमः स्वाहा ॥ यन्मे माता प्रलुलोभचरत्यननुव्रता । तन्मे रेतः पितावृङ्क्तामाभुरन्योवपद्यताᳫ स्वधा नमः स्वाहा ॥

यद्वः क्रव्यादं गमदहल्लोकान्नयन्प्रणयजातवेदाः । तद्वो अहं पुनरावेशयाम्यरिष्टाः सर्वैरङ्गैः सम्भवत पितरः स्वधा नमः स्वाहा ॥ सोमाय पितृमते शुष्मिणे जुहुमो हविः । वाजिन्निदं जुषस्व नः स्वजा हव्यं देवेभ्यः

पितृभ्यः स्वधा नमः स्वाहा ॥ अङ्गिरस्वन्तमूतये यमं पितृमन्तमाहुवे । वैवस्वतेदमद्भिनः स्वजा हव्यं देवेभ्यः पितृभ्यः स्वधा नमः स्वाहा ॥ यदंग्ने कव्यवाहन पितृन् यक्ष्यृंतावृधः । प्रदेवेभ्यो वहाहव्यं पितृभ्यश्च स्वजा हव्यं देवेभ्यः पितृभ्यः स्वधा नमः स्वाहा ॥ ओं भूः पृथिवीसंमन्तस्यतेऽग्नि-रुंपद्रष्टर्चऽस्ते महिमा दत्तस्याप्रंमादायो भुवोऽन्तरिक्ष॰ संमन्तस्यतं वायुरुंपश्रोता यजू॰षिते महिमा दत्तस्याप्रंमादायो॰सुवर्द्योः संमन्तस्यतं आदित्योऽनुख्याता सामांनिते महिमा दत्तस्याप्रंमादाय ॥

पृथिवी ते पात्रं द्यौरंपिधानं ब्राह्मंणस्त्वा मुखेऽमृतं जुहोमि । ब्राह्मणानां त्वा विंद्यावतां प्रांणापानयोंर्जुहोम्यक्षिंतमसिमैषांक्षैंष्ठा अमुत्रामुष्मिंल्लोके ॥ ये चेह पितरो ये च नेहया॰श्चं विद्मया॰ उंचन प्रं विद्म । त्वं वैंत्थ यदि ते जांतवेदः स्वधाभिंर्यज्ञ॰ सुकृंतं जुषस्व ॥ ऊर्जंस्वतीः स्वधया वन्दंमानास्तां तें स्योनाः स्रवंन्तीः । ऊर्जं वहंन्तीः स्वधमादंमक्षितं क्षीरममृतं घृतं दधिमधुपयः ॥ ये नः पतिंता गर्भा असृग्भाजं उषासते । तेभ्यः स्वजा स्वंधा नमस्तृप्णुंवन्तु मदंन्तु च ॥ य आमा ये पक्का ये च दुष्टाः पतन्ति नंः । तेभ्यः स्वजा स्वंधा नमस्तृप्णुंवन्तु मदंन्तु च ॥

ये कुंमारा याः स्त्रियो ये विज्ञाताः पतन्ति नंः ॥ तेभ्यः स्वजास्वंधा नमस्तृप्णुंवन्तु मदंन्तु च ॥ वीरं में पितंरोदत्त पितृमानहं युष्माभिंर्भूयास॰ सुप्रजसो मयां यूयं भूंयास्त ॥ ऊर्जं वहंन्तीरमृतं घृतं पयः कीलालं परिस्रुतं॰स्वधास्थं तर्पयंत मे पितृ॰ स्तृप्यंत तृप्यत तृप्यंत ॥

मधुमतीरोषधीर्द्याव आपो मधुमान्नो भवत्वन्तरिक्षम्। क्षेत्रस्यपतिर्मधुमान्नो अस्त्वरिष्यन्तो अन्वेनं चरेम॥ उत्तिष्ठत पितरः प्रेत शूरा यमस्य पन्थामनुयाता पुराणम्। धत्तादस्मासु द्रविणं यच्च भद्रं प्रणोब्रूताद्भागधां देवतासु। यन्तु पितरो यथालोकं मनसा जवेन॥ आम आगच्छन्तु नवचत्वारिꣳशत्॥ प्रसुग्मन्ता ये बध्वंश्चन्द्रं विष्णुर्योनिं प्रवेधसेऽभ्यः सम्भूतो यज्ञोपवीतं याज्ञिकेभ्य इमꣳ स्तोममात्वावहन्त्वाम आगच्छन्तु दश॥ प्रसुग्मन्ता षट्त्रिꣳशत्॥ प्रसुग्मन्ता मनसा जवेन॥

## मन्त्रप्रश्नः - २

ॐ वास्तोष्पते ध्रुवास्थूणाꣳ सत्रꣳ सोम्यानाम्। द्रप्सो भेत्ता पुराꣳ शश्वतीनामिन्द्रो मुनीनाꣳ सखा॥ गृह्वं भयं यच्चेह्विपात्सु यदुचेच्चतुष्पात्सु भयं यदस्ति। अग्निर्यविष्ठ्यः प्रणुदतु तद्भयꣳ शन्नः प्रजाभ्यः शमु नः पशुभ्यः॥ अक्षिरयन्देऽङ्कचले च यद्भयं यद्भाशिते यदुचेहुरुक्ते। अग्निर्यविष्ठ्यः प्रणुदतु तद्भयꣳ शन्नः प्रजाभ्यः शमुनः पशुभ्यः॥ दुःस्वप्ने पापस्वप्ने च यद्भयꣳ स्वप्नाशने यदमेध्यदर्शने। अग्निर्यविष्ठ्यः प्रणुदतु तद्भयꣳ शन्नः प्रजाभ्यः शमुनः पशुभ्यः॥

वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो। अजरासस्ते

सख्ये स्याम पितेवं पुत्रान्प्रतिं नो जुषस्व ॥ अमीवहा वास्तोष्पते विश्वारूपाण्याविशन् । सखा सुशेवं एधि नः ॥ त्वं विप्रस्त्वं कविस्त्वं विश्वा रूपाणिं धारयन् । अपजन्यं भयंनुदापं चक्राणिं वर्तय गृहॅं सोमंस्य गच्छतम् ॥ वास्तोष्पते चतुर्दश ॥

यो ब्रह्मा ब्रह्मण उज्जभार प्राणेश्वरः कृत्तिवासाः पिनाकी । ईशानो देवः सन आयुर्दधातु तस्मै जुहोमि हविषा घृतेन ॥ विभ्राजमानः सरिरस्य मध्याद्रोचमानो घर्मरुचिर्य आगात् । स मृत्युपाशादपनुद्य घोरादिहायुषे नो घृतमंत्तु देवः ॥ ब्रह्मज्योतिर्ब्रह्मपत्नीषु गर्भं यमादधात्पुरुरूपं जयन्तम् । सुवर्णरंभं ग्रहमर्कमर्च्यं तमायुषे वर्धयामो घृतेन ॥ श्रियं लक्ष्मी-मौपलामम्बिकाङ्गां षष्ठीं जयामिन्द्रसेनेत्युदाहुः । तां विद्यां ब्रह्मयोनिॅं सरूपामिहायुषे तर्पयामो घृतेन ॥

दाक्षायण्यः सर्वयोन्यंस्सयोन्यः सहस्रशो विश्वरूपा विरूपाः । ससूनवस्सपतयः सयूथ्या आयुषेणो घृतमिदं जुषन्ताम् ॥ दिव्या गणा बहुरूपाः पुराणा आयुश्छिदो नः प्रमथ्नन्तु वीरान् । तेभ्यो जुहोमि बहुधा घृतेन मा नः प्रजाॅं रीरिषो मोत वीरान् ॥ एकः पुरस्ताद्य इदं बभूव यतो बभूव भुवनंस्य गोपाः । यमप्येति भुवनॅं साम्पराये स नो हविर्घृत-मिहायुषेत्तु देवः ॥ वसून् रुद्रानादित्यान्मरुतोऽथ साध्यानृभून्यक्षान्गन्धर्वाॅंश्च पितॄॅंश्च विश्वान् । भृगून्सर्पाॅंश्चाङ्गिरसोऽथ सर्वान्घृतॅं हुत्वा स्वायुष्या महयाम शश्वत् ॥ यो ब्रह्मा षोडश ॥

ते सूनवः स्वपंसः सुदंसंसो महीजंज्ञुर्मातरां पूर्वचिंत्तये। स्थातुश्च सत्यं जगंतश्च धर्मंणि पुत्रस्यं पाथः पदमद्वंया विनः॥ ते मायिनों ममिरे सुप्रचैंतसो जामीसयोंनीमिथुना समोंकसा। नव्यं नव्यं तन्तुमातंन्वते दिवि संमुद्रे अन्तः कवयंः सुदीतयंः॥ तरत्समन्दी धांवति धारांसु तस्यान्धंसः॥ तरत्समन्दी धांवति॥ उस्रावेंदवसूंनां मर्तस्य देव्यवंसः॥ तरत्समन्दी धांवति॥ ध्वस्रयोंः पुरुषन्त्योरासहस्रांणि दद्महे॥ तरत्समन्दी धांवति॥

आययोंस्त्रिꣳ शतन्तनां सहस्रांणि च दद्मंहे। तरत्समन्दी धांवति॥ एतोन्विन्द्रंस्तवांमशुद्धꣳ शुद्धेन साम्नां। शुद्धैरुक्थैर्वांवृध्वाꣳ संꣳशुद्ध आशीर्वांन्ममत्तु॥ इन्द्रं शुद्धो न आगंहि शुद्धः शुद्धाभिंरूतिभिंः। शुद्धो रयिं निधांरय शुद्धो मंमद्धि सोम्यः॥ इन्द्रं शुद्धो हि नों रयिꣳ शुद्धो रत्नांनि दाशुषें। शुद्धो वृत्राणिं जिघ्न से शुद्धो वाजंꣳ सिषाससि॥ शुचींवो हव्या पुनंर्मामैत्विन्द्रियम्॥ ते सूनव एकान्नविंꣳशतिः॥

भूरायुंर्मे धारयत प्राणं में धारयत प्रजां में धारयत पशून्मे धारयत माम आयुंः प्राणाः प्रजाः पशवः परांसिच्येरन्॥ पुमांꣳसौ मित्रवरुंणौ पुमांꣳ सावश्विनांवुभौ। पुमानिन्द्रंश्च सूर्यश्च पुमांꣳसंवर्धयताम्॥ सिगंसिनसि वज्रो नमंस्ते अस्तु मा मां हिꣳसीः॥ उद्गातेवं शकुने सामंगायसि ब्रह्मपुत्र इंव सवंनेषु शꣳ ससि। स्वस्ति नंः शकुनें अस्तु प्रतिनः सुमनां भव॥ अनुहवं परिहवं परीवादं परिक्षपम्। दुःस्वप्नं दुरुदितं तद्विषद्भ्यों दिशाम्यहम्॥ अनुंहूतं परिंहूतꣳ शकुनैर्यदशांकुनम्। मृगस्यं सृतमंक्षणाय तद्विषद्भ्यों दिशाम्यहम्॥

नमः शकृत्सदे रुद्राय नमो रुद्राय शकृत्सदे गोष्ठमसि नमस्ते अस्तु मा मां हिꣳसीः । कृतं तीर्थꣳ सुप्रपाणꣳ शुभस्पती स्थाणुं पथेष्ठामपदुर्मतिꣳ हतम् ॥ श्रियो मे श्रियं वृद्धिं वहन्तु मा मां हिꣳसिषुर्वहन्तमोह्यमानम् । देवाञ्जनमगन्यज्ञस्ततो मा यज्ञस्याशीरवन्तु ॥ वर्धतां भूतिर्दध्ना घृतेन मुञ्चतु यज्ञो यज्ञपतिमꣳ हसः । शिवाः पीता भवथ यूयमापोऽस्माकं योनावुदरे सुशेवाः ॥ इरावतीरनमीवा अनागसः स्वस्ति नो भवथ जीवसे । यदत्रापि रसस्य मेनिरंष्ठविषमस्मृतः ॥ अग्निष्टत्सोमं पृथिवी पुनरात्मन्दधातु मे ॥ मयि दक्षक्रतू ॥

यन्मे रेतः परितोषात्तर्पिथ । अग्निहोत्रमिव सोमेन तदहं पुनराददे ॥ इयं ते यज्ञियां तनूः । अपो मुञ्चामि न प्रजामꣳहोमुचः स्वाहाकृताः पृथिवी-माविशत ॥ कफस्यानामापरस्थ स्वाहाकृताः पृथिवीमाविशत ॥ तपस्या-नामापरस्थ स्वाहाकृताः पृथिवीमाविशत ॥ दुःस्वप्नपापस्वप्नोपभुक्तैर्ब्रह्माहमन्तरं करवै न हि स्वप्नमुपग्रथत ॥ यदन्नमद्यते नक्तं न तत्प्रातः क्षुधोऽवति । सर्वं तदस्मान्मा हिꣳसीन्न हि तद्ददृशे दिवा ॥ नमो रुद्रियाभ्योऽद्भ्यः स्वाहा ॥

इदं मिथुनमायुष्मदस्त्विदं मिथुनं प्रजावदस्त्विदं मिथुनं पशुवदस्त्विदं मिथुनं वीर्यवदस्तु । अयं नो मह्याः पारꣳ स्वस्ति नैपद्वनस्पतिः ॥ यदस्मिन्कर्मण्यन्तरं गाम मन्त्रतः कर्मतो वा । अनयाहुत्या तच्छमयामि सर्वं तृप्यन्तु देवा अवृषन्तां घृतेन ॥ प्रजापतये स्वाहा हिरण्यगर्भाय स्वहा भृगूणां पतये स्वाहाङ्गिरसां पतये स्वाहा ॥ किमुत्पतसि किमुत्प्रेष्ठाः शान्तः

शान्तेरिहागहि। अघोरो यज्ञियो भूत्वासीदसदन॒ स्वम्॥ सन्नाम्नः स॒हृदयानि सन्नाभिः सन्तनु त्वचः। सन्त्वा कामस्य योक्त्रेण युज्याम्यविमोचनात्॥ सचित्रचित्रं चितयन्तमस्मे चित्रक्षत्र चित्रतमं वयोधाम्। चन्द्र॒ रयिं पुरुवीरं बृहन्तं चन्द्रं चन्द्राभिर्गृणते युवस्व॥ उपसृजन्मात्रेवत्सं धारयं धरुणोऽधयत्रायस्पोषमिषमूर्जमस्मासु दीघरत्स्वाहा॥ भूरायुर्मे द्विचत्वारि॒शत्॥

[१]**शन्नसूक्तम्** - शन्न इन्द्राग्नी भवतामवोभिः शन्न इन्द्रावरुणा रातहव्या। शमिन्द्रासोमा सुविताय शं योः शन्न इन्द्रापूषणा वाजसातौ॥ शन्नो भगः शमु नः शंसो अस्तु शन्नः पुरंधिः शमु सन्तु रायः। शन्नः सत्यस्य सुयमस्य शंसः शन्नो अर्यमा पुरुजातो अस्तु॥ शन्नो धाता शमु धर्ता नो अस्तु शन्न उरूची भवतु स्वधाभिः। शं रोदसी बृहती शन्नो अद्रिः शन्नो देवानां सुहवानि सन्तु॥ शन्नो अग्निर्ज्योतिरनीको अस्तु शन्नो मित्रावरुणावश्विना शम्। शन्नः सुकृतां सुकृतानि सन्तु शन्न इषिरो अभि वातु वातः॥ शन्नो द्यावा पृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो अस्तु। शन्न ओषधीर्वनिनो भवन्तु शन्नो रजसस्पतिरस्तु जिष्णुः॥

शन्न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुणः सुशंसः। शन्नो रुद्रो रुद्रेभिर्जलाषः शन्नस्त्वष्टा ग्नाभिरिह शृणोतु॥ शन्नः सोमो भवतु ब्रह्म शन्नः शन्नो ग्रावाणः शमुसन्तु यज्ञाः। शन्नः स्वरूणां मितयो भवन्तु शन्नः प्रस्व१ः

---

शाम्वंस्तु वेदिः ॥ शन्नः सूर्यं उरुचक्षा उदेतु शन्नश्चतस्रः प्रदिशो भवन्तु । शन्नः पर्वता ध्रुवयो भवन्तु शन्नः सिन्धवः शमु सन्त्वापः ॥ शन्नो अदितिर्भवतु व्रतेभिः शन्नो भवन्तु मरुतः स्वर्काः । शन्नो विष्णुः शमु पूषा नो अस्तु शन्नो भवित्रं शाम्वंस्तु वायुः ॥ शन्नो देवः सविता त्रायमाणः शन्नो भवन्तूषसो विभातीः । शन्नः पर्जन्यो भवतु प्रजाभ्यः शन्नः क्षेत्रस्य पतिरस्तु शम्भुः ॥

शन्नो देवा विश्वदेवा भवन्तु शं सरस्वती सह धीभिरस्तु । शमभिषाचः शमु रातिषाचः शन्नो दिव्याः पार्थिवाः शन्नो अप्याः ॥ शन्नः सत्यस्य पतयो भवन्तु शन्नो अर्वन्तः शमु सन्तु गावः । शन्न ऋभवः सुकृतः सुहस्ताः शन्नो भवन्तु पितरो हवेषु ॥ शन्नो अज एकपाद्देवो अस्तु शन्नोऽहिर्बुध्न्य१ः शं समुद्रः । शन्नो अपान्नपात्पेरुरस्तु शन्नः पृश्निर्भवतु देवगोपा ॥ आदित्या रुद्रा वसवो जुषन्तेदं ब्रह्म क्रियमाणन्नवीयः । शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः ॥ ये देवानां यज्ञिया यज्ञियानां मनोर्यजत्रा अमृता ऋतज्ञाः । तेनोरासन्तामुरुगायमद्य यूयम्पात स्वस्तिभिः सदा नः ॥ शन्नस्त्रि९शत् ॥

हिरण्यवर्णा हरिणी ........ पुरुषानहम् ॥ हिरण्यवर्णा त्रि९शत् ॥

**[1]मुञ्चामित्वासूक्तम्** - मुञ्चामि त्वा हविषा जीवनाय कमज्ञात-

यक्ष्मादुत राजयक्ष्मात्। ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्र मुमुक्तमेनम्॥ यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकन्नीत एव। तमा हरामि निर्ऋतेरुपस्थादस्पार्षमेनं शतशारदाय॥ सहस्राक्षेण शतशारदेन शतायुषा हविषाहार्षमेनम्। शतं यथेमं शरदो नयातीन्द्रो विश्वस्य दुरितस्य पारम्॥ शतं जीव शरदो वर्धमानः शतं हेमन्तान्छतमु वसन्तान्। शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः॥ अहार्षं त्वा विदं त्वा पुनरागाः पुनर्नव। सर्वाङ्ग सर्वन्ते चक्षुः सर्वमायुश्च तेऽविदम्॥ मुञ्चामित्वा दश॥

[1]समुद्रज्येष्ठाः सलिलस्य मध्यात्पुनाना यन्त्यनिविशमानाः। इन्द्रो या वज्री वृषभो रराद ता आपो देवीरिह मामवन्तु॥ या आपो दिव्या उतवा स्रवन्ति खनित्रिमा उत वा याः स्वयंजाः। समुद्रार्था याः शुचयः पावकास्ता आपो देवीरिह मामवन्तु॥ यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम्। मधुश्चुतः शुचयो याः पावकास्ता आपो देवीरिह मामवन्तु॥ यासां राजा वरुणो यासु सोमो विश्वे देवा यासूर्जं मदन्ति। वैश्वानरो यास्वग्निः प्रविष्टस्ता आपो देवीरिह मामवन्तु॥ त्रायन्तामिह देवास्त्रायन्तां मरुतांगणः। त्रायन्तां विश्वाभूतानि यथायमरपा असत्॥

आप इद्वा उ भेषजीरापो अमीवचातनीः। आपः सर्वस्य भेषजीस्तास्ते कृण्वन्तु भेषजम्॥ हस्ताभ्यां दश शाखाभ्यां जिह्वा वाचः पुरो गवि।

---

१. [illegible]

अनामयित्नुभ्यां त्राताभ्यां त्वोपस्पृशामसि ॥ इमा आपः शिवतमा इमाः सर्वस्य भेषजीः । इमा राष्ट्रस्य वर्धनीरिमा राष्ट्रभृतोऽमृताः ॥ याभिरिन्द्र-मभ्यषिञ्चत्प्रजापतिः सोमं राजानं वरुणं यमं मनुम् । ताभिरद्भिरभिषिञ्चामि त्वामहं राज्ञां त्वमधिराजो भवेह ॥ महान्तं त्वा महीनां सम्राजं चर्षणीनाम् । देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ देवस्य त्वा सवितुः प्रसवेऽ-श्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यामग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणा-भिषिञ्चामि ॥ बलाय श्रियै यशसेऽन्नाद्याय । भद्रं नो अपिवातय मनः ॥ समुद्रज्येष्ठा द्वाविंशतिः ॥

[1]यक्ष्मनाशन सूक्तम् (अक्षीभ्यां सूक्तम्) - अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां छुबुकादधि । यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया वि वृहामि ते ॥ ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात् । यक्ष्मन्दो-षण्ये मंसाभ्यां बाहुभ्यां वि वृहामि ते ॥ आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठो-र्हृदयादधि । यक्ष्मं मतस्नाभ्यां यक्नः प्लाशिभ्यो वि वृहामि ते ॥ ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् । यक्ष्मं श्रोणिभ्यां भासदाद्भंससो वि वृहामि ते ॥ मेहनाद्वनंकरणाल्लोमभ्यस्ते नखेभ्यः । यक्ष्मं सर्वस्मादा-त्मनस्तमिदं वि वृहामि ते ॥ अङ्गादङ्गाल्लोम्नोलोम्नो जातं पर्वणिपर्वणि । यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते ॥ अक्षीभ्यां द्वादश ॥

सिंहेमे मन्युः । व्याघ्रे मैन्तरामयः । वृके मेक्षुत् । अश्वेमे घ्रसिः ।

---

धन्वनिं मे पिपासा। राजगृहे मेऽशनया। अश्मनिं मे तन्द्रिः। गर्दभे मेऽर्शः।
शय्यंके मे ह्रीः। अश्वत्थे में वेपथुः॥

कूर्मे मेंऽङ्गरोगः। बस्तें मेऽपसर्या। अप्रिंये मे मृत्युः। भ्रातृंव्ये मे पाप्मा। सपत्नें मे निरृतिः। दुष्कीर्तौ मे व्यृद्धिः। परस्वतिं मे समृद्धिः। खड्गें म आर्तिः। गवयें म आन्ध्यम्। गौरें मे बाधिर्यम्॥

ऋक्षें मे शोकः। गोधायाँ मे स्वेदः। जरायाँ मे हिमः। कृष्णशकुनौ में भीरुता। कशे मे पांप गन्धः। उलूकें मेऽश्वम्यशः। क्रोकें म ईर्ष्या। मर्कटें मे दुरृद्धिः। कुललें मे मᳲँस्या। उललें मे प्रध्या॥

उष्ट्रें मे तृष्णा। ऋश्यें मे श्रमः। अव्याँ म आव्यंम्। कोशें मे गन्धः। कुमार्या मेंऽलङ्कारः। सूकरें मे क्रदथुः। प्रदाखुनिं मे स्वप्नः। अजगरे में दुःस्वप्नः। विद्युतिं मे स्म यशः। लोभायाँ मे क्लेदः॥

शरभे में पाप्मां लक्ष्मीः। स्त्रीषुं मेऽनृतम्। अजासुं मे कर्कशः। व्रात्यें म ईत्या। शूद्रें मे स्तेयम्। वैश्ये मे कांर्मकृत्यम्। राजन्यबन्धुनिं मेऽज्ञानम्। नैषादे मे ब्रंह्म हत्या। कुलिङ्गें मे क्षवथुः। उललें मे विलासः॥

उद्रिणिं मे वमतिः। किंपुरुषें मे रोदः। द्वीपिनि मे निष्टपत्। हस्तिनिं मे किलासः। शुनि में दुरिप्रम्। स्रावन्त्येंषु मे म्लेच्छः। विदेहेंषु मे शीपथः। महावर्षेषु मे ग्लौः। मूजवंत्सु मे तप्मा। दुन्दुभौ में कासिका॥

इक्ष्वाकुंषु मे पित्तम्। कलिङ्गेंषु मेऽमेध्यम्। अश्वतर्यां मेंऽप्रजस्ता।

**घनपाठः** – निकामेनिंकामे नो नो निकामेनिंकामे निकामेनिंकामे नः पर्जन्यंः पर्जन्यो नो निकामेनिंकामे निकामेनिंकामे नः पर्जन्यंः ॥ नः पर्जन्यंः पर्जन्यो नो नः पर्जन्यो वर्षतु वर्षतु पर्जन्यो नो नः पर्जन्यो वर्षतु ॥ पर्जन्यो वर्षतु वर्षतु पर्जन्यंः पर्जन्यो वर्षतु फलिन्यंः फलिन्यो वर्षतु पर्जन्यंः पर्जन्यो वर्षतु फलिन्यंः ॥ वर्षतु फलिन्यंः फलिन्यो वर्षतु वर्षतु फलिन्यो नो नः फलिन्यो वर्षतु वर्षतु फलिन्यो नः ॥ फलिन्यो नो नः फलिन्यंः फलिन्यो न ओषंधय ओषंधयो नः फलिन्यंः फलिन्यो न ओषंधयः ॥ न ओषंधय ओषंधयो नो न ओषंधयः पच्यन्तां पच्यन्तामोषंधयो नो न ओषंधयः पच्यन्ताम् ॥ ओषंधयः पच्यन्तां पच्यन्तामोषंधय ओषंधयः पच्यन्तां योगक्षेमो योगक्षेमः पंच्यन्तामोषंधय ओषंधयः पच्यन्तां योगक्षेमः ॥ पच्यन्तां योगक्षेमो योगक्षेमः पंच्यन्तां पच्यन्तां योगक्षेमो नो नो योगक्षेमः पंच्यन्तां पच्यन्तां योगक्षेमो नः ॥ योगक्षेमो नो नो योगक्षेमो योगक्षेमो नः कल्पतां कल्पतान्नो योगक्षेमो योगक्षेमो नः कल्पताम् ॥ नः कल्पतां कल्पतान्नो नः कल्पताम् ॥ कल्पतामिति कल्पताम् ॥

---

पुꣳश्चल्यां मे दुंश्चरितम्। आखुनिं मे दन्तरोगः। मक्षिकांयां मे श्वल्कुशः। शुकें मे हरिमा। मयूरें मे जल्प्या। वृषें मे जरा। चाषे मे पांपवादः॥ अप्सुं मे श्रमः। ब्रह्मोज्झें मे किल्बिषम्। अपेंहि पाप्मन्पुनरपंनाशितो भवांनः पाप्मन्त्सुंकृतस्यं लोके पाप्मन्धेंह्यविहृंतो यो नंः पाप्मन्नजंहाति। तमुंत्वा जहिमो वयमन्यत्रास्मन्निविंशताम्। सहस्राक्षो अमंर्त्यो यो नो द्वेष्टि सरिंष्यतु। यमुंद्विष्मस्तमुंजहि। सुमित्रा न आप ओषंधयः सन्तु दुर्मित्रास्तस्मैं भूयासुर्योऽस्मान्द्वेष्टि यं चं वयं द्विष्मः॥ सिꣳहे में सप्तसंततिः॥

वास्तोंष्पते यो ब्रह्मा ते सूनवो भूरायुंर्मे शन्नं इन्द्राग्नी हिरंण्यवर्णां मुञ्चामिं त्वा समुद्रज्यैंष्ठा अक्षीभ्यांꣳ सिꣳहे मे दशं॥ वास्तोंष्पतेऽष्टाविंꣳशतिः॥ वास्तोंष्पते वयं द्विष्मः॥



# अथर्ववेदमन्त्राः

काण्डम् - १, प्रपाठकः - १, अनुवाकः - ३, सूक्तम् - १२.

## रोगनिवारणसूक्तम्

जरायुजः प्रथम उस्रियो वृषा वातभ्रजा स्तनयन्नेति वृष्ट्या। स नो मृडाति तन्व ऋजुगो रुजन् य एकमोजस्त्रेधा विचक्रमे ॥ अङ्गे अङ्गे शोचिषा शिश्रियाणं नमस्यन्तस्त्वा हविषा विधेम। अङ्कान्त्समङ्कान् हविषा विधेम यो अग्रभीत्पर्वास्या ग्रभीता ॥ मुञ्च शीर्षक्त्या उत कास एनं परुष्परुराविवेशा यो अस्य। यो अभ्रजा वातजा यश्च शुष्मो वनस्पतीन्त्सचतां पर्वतांश्च ॥ शं मे परस्मै गात्राय शमस्त्ववराय मे। शं मे चतुर्भ्यो अङ्गेभ्यः शमस्तु तन्वे ३ मम ॥

